ॐ

# ॥ वयोनिर्णयः ॥

(ऋतुमतीविवाहवादखण्डनरूपः)

श्रीकाञ्चीकामकोटिपीठाधिपति

श्रीजगद्गुरुशङ्कराचार्यस्वामि मठस्य

आस्थानपण्डितेन

---

प. गणपतिशास्त्रिणा

कृतः

तेषामेव श्रीशङ्कराचार्यचरणाना

माज्ञया

---

कुम्भकोणम्

श्रीविद्यामुद्राक्षरशालायां

मुद्रितः

---

१९१०.

॥ श्रीगुरुभ्यो ॥

# ॥ वयोनिर्णयः प्रारभ्यते ॥

ईशं व्यासं श्रीमतश्शंकरार्यान्
वन्दे तांश्च त्यागराजाध्वरीन्द्रान् ।
श्रुत्या सूत्रैर्भाष्यतस्तत्प्रबोधैः
ये नामास्मानन्वगृह्णन् यथावत् ॥ १ ॥

स्त्रीमूलस्सर्वधर्मो जगति सुविदितस्ताश्च हित्वा विवाहं
न ग्राह्याश्शास्त्रदृष्ट्या स च विधिविहितोऽपेक्षते कालमेकं ।
निर्णेतव्यश्च सोऽयं श्रुतितदनुगुणस्मृत्यभिप्रायदृष्ट्या
नोचेद्धर्मस्तदर्थो श्रुतिरखिलमपि क्षीयते मूलदोषात् ॥२॥

(यद्यपि)
बहुभिर्विबुधैः पुरानिबंधे—
ष्वयमर्थो बहुधा विचार्य सम्यक् ।
निरणायि न तत्र मादृशानां
मतिकौशल्यनिवेशनावकाशः ॥ ३ ॥

तदपि प्रथयन्ति केचिदस्मिन्
परथाभावमपार्थकल्पनेन ।
तमिमं बलवन्नयेन भिन्दन्
प्रतनं भावमहं स्थिरीकरोमि ॥ ४ ॥

**विवाह्यविप्रकन्यानां वयोभेदविनिर्णयः ।**
**श्रुतिस्मृत्युदितैर्वाक्यैस्सत्तर्कैश्च विधीयते ॥ ९ ॥**

इहहि त्रैवर्णिकानां सतामास्तिकानामैहिकामुष्मिकश्रेयोहेतुर्यावान् श्रौतस्स्मार्तो वा धर्मकलापस्स सर्वोऽपि स्त्रीरक्षणमूलक एव नान्यथासंभवति, आश्रमान्तराणामपि गृहस्थोपजीव्यकत्वादित्यभिप्रयन्ति मुनयः । तथाहि मनुः—

**स्वां प्रसूतिं चरित्रं च कुलमात्मानमेवच ।**
**स्वं च धर्मं प्रयत्नेन जायां रक्षन् हि रक्षति ॥** इति ।

तथा स एव—

**पिता रक्षति कौमारे भर्ता रक्षति यौवने ।**
**पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥** इति ।

तथा दक्षोऽपि—

**गृहाश्रमात्परो नास्ति यदि भार्या वशानुगा ।**
**तथा धर्मार्थकामाख्यं त्रिवर्गं फलमश्नुते ॥**

**आनुकूल्यं कलत्रस्य स्वर्गो भवति निश्चितम् ।**
**प्रातिकूल्यं कलत्रस्य नरको नात्र संशयः ॥** इत्याह ।

अत्रच वचनेषु सन्तानादीनां स्त्रीरक्षणायत्तां रक्षां स्मरन् स्त्रीदोष एव सन्तानादिदोषहेतुरित्यप्यर्थात्प्रदर्शयति । स चायं दोषो ऽशास्त्रीयकर्मसुप्रसंग एव । तस्मिंश्च दोषे स्त्रीषु प्रसजति सन्तानादयो दुष्येयुः । सन्ततिदोषे च सति वर्णव्यवस्थाऽऽदिकं पलायते ।

अतएव स्त्रीदोषो विमृश्यमानो वर्णसाङ्कर्यस्यैव मूलं भवति, तथा-चोक्तम् गीतायां—

**स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः।** इति।

वर्णसाङ्कर्ये च सति वर्णाश्रमविभागः, तदुपजीवी श्रुतिस्मृतितदर्थानुष्ठानादिरूपो धर्मसेतुश्च मूलतएव विभिद्येतेति महानेवानर्थः। सर्वमेतन्मनासिकृत्यैव महता प्रयत्नेन महर्षयः स्त्रीरक्षणं सर्वश्रेयोमूलभूतमुपादिशन् तत्रतत्र। आनुशासनिके च पर्वणि आदितएव बह्वत्रोपाख्यायते महाभारते। भगवानापस्तंबश्चात्र विषये श्रुतिं कांचिदुदाजहार—

**(तृ॰ प्र॰ ष॰ प) अप्रमत्ता रक्षथ तन्तुमेतं मा वः क्षेत्रे परबीजानिवाप्सुः। जनयितुः पुत्रो भवति साम्पराये मोघं वेत्ता कुरुते तन्तुमेतं** इति।

दुष्टेन च सन्तानेन क्रियमाणमपि कर्मजातं न शास्त्रानुसारि भवति नवा पितुः पारलौकिकफलोपभोगहेतुभावं भजतीति श्रुत्यादिसिद्धं परमं तात्पर्यं। क्षेत्रजादीनामपि पुत्रत्वं तत्रतत्र स्मर्यमाणमैहिकेषु दायविभागादिष्वेव फलेषूपयुज्यते इत्यभिप्रायकमिति न तद्बलेन साम्परायिकधर्मतत्फलप्रत्याशा घटते। तथाच श्रूयते—

**न शेषो अग्ने अन्यजातमस्त्यचेतानस्य मापथोविदुषः। न हि ग्रभायारणस्सुशेवोऽन्योदर्यो मनसा मन्तवाउ (५–२–६)** इति। अत्र अन्योदर्यः पुत्रो मनसाऽपि स्वपुत्रत्वेन न मन्तव्य इत्यादिरर्थ इति स्फुटं निरुक्ते भाष्येच।

शुद्ध-

तदेवं सर्वानर्थमूलतया संभाव्यमानो दोषस्स्त्रीषु प्रसजन् शरीरेणेव वाचा मनसाच संपाद्यमानोऽपि दोषएव भवति नापरथा। अधर्मो धर्मो वा कर्मसामान्यमुत्पद्यमानं शरीरं वाचं मनश्चेति त्रीण्यायतनान्याश्रित्यैव उत्पद्यमानं दृश्यते। तत्र शारीरस्येव कर्मणः वाचिकस्य मानसस्य वाऽपि धर्मत्वमधर्मत्वं च यथाशास्त्रं संभवन्नकेन चिन्निराकर्तुं शक्यं। स्पष्टं चेदं समन्वयाधिकरणोपक्रमश्रीशांकरभाष्ये। प्रत्युत धर्माधर्मयोश्शारीरवाचिकावपेक्ष्य मानसस्यैव ज्यायस्त्वमुपदिशन्ति धर्मतत्वविदो महर्षयः। अतएव शरीरेण वाचाच पुरुषान्तरेणासंप्रयुज्यमानाअपि हि स्त्रियः पुरुषान्तरभावनया दुष्यन्त्यस्संजायमानं गर्भमपि दूषयन्ति। तदुक्तं वराहमिहिरेण—

**चित्तेन भावयति दूरगताऽपि यं स्त्री गर्भं बिभर्ति सदृशं पुरुषस्य तस्य** (अध्या ७९) इति। तस्मात् प्रामादिकेन स्त्रीणां मानसव्यभिचारदोषेणापि सन्ततयो दुष्यन्तीति तत्कृतसांपरायिककर्मफलमपि पितॄणां दुष्प्रापमेवेति तद्दोषपरिहारार्थएव मन्त्रः कश्चिदाम्नायते **"यन्मे माता"** इत्यादिः। अयं च मन्त्रस्तदनुसारेणैव पित्र्यकर्मणि प्रधानभूते होमे विनियुज्यते।

यस्तु मेधाविनामूहःकश्चित् प्राचीनाः खल्वस्मदीयाः प्रायेण संशयात्मानः स्वबुद्धेरविश्वासदोषात् पूज्यास्वपि मात्रादिषु व्यभिचारदोषं दुस्संभावनया कल्पयन्ति स्म। अथच तद्दोषपरिहारार्थत्वेनाचारसिद्धमेवेदृशं मन्त्रमपि प्रयोक्तुमुपचक्रमिरे। सचायमाचारश्चिराय रूढमूलस्सर्वतः प्रसिद्धिमापेद इति। अत्र वदामः किमंग स्त्रीषु संशयकल्पनामूलभूतोऽयमविश्वासस्सामान्यतः प्राचीनानां, उत म-

न्वादीनामेवर्षीणाम्, उतानादिसिद्धाया भगवत्याश्श्रुतेरेव, कथमिदमभ्यूहतेभवान्। यद्यस्मादृशामेव केषांचिदयमाशयदोषस्तन्मूलकएव चायमाचार इति प्रमाणेन निर्णेष्यसि तर्हि सुदूरेऽमुमाचारमुत्सृज्य वयमपि स्वस्थाएवावस्थातुमुत्सहामहे। न त्वेवं निर्णये प्रमाणमस्ति त्वद्वचनादृते। यदितु मन्वादिभिरेवायं कल्पयित्वा प्रवर्तितो लोकइति गम्यते तद्ग्रन्थेषु स्मृतिषु अस्य मन्त्रस्य श्राद्धहोमे तद्विनियोगस्य च स्पष्टमुपलंभादिति ब्रूषे, तदा कीदृशं फलमभिसन्धाय एवंविधमत्यन्तायुक्तं प्राकृतजनैरप्यक्रियमाणं मात्रादिष्वपि दोषबुद्धिकल्पनं तादर्थ्येन मन्त्रादिकमपि ते कल्पितवन्त इति निरूपणीयं मेधाविना। नखलु प्रत्यक्षधर्माणस्ते लोकानामनर्थफलकमेवेदृशं किञ्चित्कल्पितवन्त इति प्राकृतस्य कुकल्पनमुपादेयं भवति। मन्वादयो हि स्त्रीस्वभावनिरूपणावसरे भाविनामस्मादृशामुत्प्रेक्षापाण्डित्यं विजानन्तएवात्रात्मदोष शंकापरिजिहीर्षया श्रुतीरेव प्रमाणत्वेन उदाजह्रुः। नवमाध्याये हि मनुः बहुभिश्श्लोकैस्स्वाभाविकं स्त्रीदोषं तत्परिहारप्रकारञ्चाभिधायात्रविषये स्वकल्पितत्वशङ्कानिवृत्तये "तथाच श्रुतयो बह्व्यो निगीता निगमेष्वपि। स्वालक्षण्यपरीक्षार्थं तासां शृणुत निष्कृतीः (९–१९) इति स्वोक्तार्थे प्रमाणभूतं स्वप्रत्यक्षं श्रुतिबहुत्वमुदाजहार। उक्तासु च श्रुतिषु दोषपरिहारार्थामवश्यविज्ञेयांच श्रुतिमेकां स्वरूपतोऽपि पपाठ समनन्तरश्लोके --

**यन्मे माता प्रलुलुभे विचरन्त्यननुव्रता।**
**तन्मे रेतः पिता वृङ्क्तामाभुरन्योऽवपद्यताम्** ॥ इति।

तस्मात् पूर्वे केचित् पुरुषाः मन्वादयो वा महर्षयः स्वाशयदोषादीदृशं स्त्रीदोषं कल्पयित्वा तन्मूलं च कञ्चिदाचारं जगति प्रवर्तयाँ-

रितीदमेव दौर्मेधस्थं । ननु श्रुतयो वा किमर्थमेवंविधं वृथादोषं स्त्रीषु कल्पितवत्यइतिचेत्, सत्यमेवमाह भवान् स्ववासनानुगुणं नतु श्रुतिरेवंस्वभावा । साहि अनतिशङ्कनीयप्रमाणभावा विद्यमानमेव तत्तदर्थमवबोधयति सर्वत्र नत्वविद्यमानमर्थं कञ्चित् क्वचिदसूयुपुरुष वत् कदाचित्कल्पयति । तस्मात् विद्यमानएवायं स्त्र्याख्यस्य वस्तुन स्स्वभावश्श्रुत्या तदनुसारिस्मृतिभिश्चावबोध्यते तद्रक्षणार्थं सांपरायिक फलसिद्ध्यर्थं चेति नात्र कुकल्पनावकाशः ।

यदपि सत्यपि संभाव्यमाने स्त्रीदोषे रजोनिर्गममात्रात्ताश्शुद्धाएव भवन्तीति धर्मोपदेशकथनं तदसत् । यत्तु रजोनिर्गममात्रेण स्त्रीणां शुद्धिबोधकं वचनं—

**स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित् ।**
**मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति ॥** इति ।

यदपि वचनान्तरं विजातीयपुरुषसंप्रयोगेऽपि गर्भग्रहणेऽपि यावद्गर्भसत्वमेव दोषः स्त्रीणां निर्गतेतु गर्भे रजोनिर्गमेच सति शुद्धाएव ता भवन्तीति यथा—

**असवर्णेन यो गर्भस्स्त्रीणां योनौ निषिच्यते ।**
**अशुद्धातु भवेन्नारी यावच्छल्यं न मुञ्चति ॥**

**निस्सृतेतु ततश्शल्ये रजसोऽपीह दर्शनात् ।**
**ततःसा शुद्ध्यते नारी विमला काञ्चनोपमा ॥** इति

तत्सर्वं स्त्रीप्रशंसनपरत्वेनार्थवादतया न विधिशतबोधितं व्यभिचारमपवदितुमीष्टे । नहीदं वचनं व्यभिचारे दोषाभावमाचष्टे 'अशु-

द्धातु भवेन्नारी''ति पुरुषान्तरसंप्रयोगनिमित्तमशुद्धत्वमिदमपि वचनं स्पष्टमेव ब्रूते। किन्तु तस्य सावधिकतां रजोनिर्गमनिवर्त्यतां चेत्यधिकमप्यर्थं वदति। तदुभयं परं प्रशंसारूपमिति वदामः। अपिचात्राशुद्धिश्शुद्धिश्चेत्युभयमपि दृष्टादृष्टभेदेन प्रत्येकं द्विविधं भवति। तत्र दृष्टोदोषः पुरुषान्तरसंप्रयोगनिमित्तस्तद्रेतोगर्भादिरूपश्शरीरेतिष्ठति। अदृष्टा पुनरशुद्धिरशास्त्रीयकर्मकरणाधीनदुरितरूपासती श्रौतस्मार्तकर्मपथाधिकारंनिवर्तयन्तीशास्त्रमात्रदृष्टा। अनयोश्चाशुद्ध्योर्गर्भरजोनिर्गमादिदृष्टहेतुव्यपाश्रयेणजायमानाशुद्धिर्दृष्टांपरमशुद्धिंनिवर्तयति नादृष्टां, तस्याश्शास्त्रीयकर्मजन्यादृष्टैकनिवर्तनीयत्वात्। नहि गर्भनिर्गमेण रजोनिस्सरणेनच कृच्छ्राद्यनुष्ठानवददृष्टमप्युत्पद्यतइत्यत्र प्रमाणमस्ति, येनानेनैव हेतुनाशुद्धिरदृष्टाऽपि संभवतीति कल्प्येत। अतएवात्रवचने "शुद्ध्यत" इति वर्तमानप्रत्ययघटितेनैव पदेन शुद्धिर्बोध्यते नादृष्टबोधको विधिशब्दःकश्चिदुपात्तोऽस्ति।

किञ्च इदमिह तत्वं रजोनिर्गममात्राच्छुद्धिस्त्रीणांस्मर्यमाणा मानसव्यभिचारमात्रेबोद्धव्या न पुनर्वाचिके नतरां तु कायिके। तथा च शुद्धिप्रकरणे मनुराह—

**मृत्तोयैश्शुद्ध्यते शोद्ध्यं नदी वेगेन शुद्ध्यति।**
**रजसा स्त्री मनोदुष्टा सन्यासेन द्विजोत्तमः॥ (५-१०८)**

इति। याः पुनः स्मृतयो मानसविशेषणमनुक्त्वा व्यभिचारसामान्यस्य रजसा शुद्धिं बोधयन्ति ताश्चमानसव्यभिचाररूपदोषविशेषतात्पर्येणैव प्रवृत्ताइति मानवंवचनमेवविवेचयति, सामान्यशास्त्रस्य विशेषशास्त्रानुसारित्वावश्यंभावात्। अनेनैवाभिप्रायेण "व्यभिचार ऋतौ शुद्ध-

शुद्धिर्गर्भे त्यागो विधीयते" इति (१—७२) याज्ञवल्कीयेवचने व्यभिचारपदं तद्विशेषपरं तच्च मानसरूपमिति व्याचचक्षिरे व्याख्यातारः। अपिच यएव वसिष्ठः—

**स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित्।**

इत्यादिना स्त्रीणामीदृशीं शुद्धिमस्मार्षीत् सएव एकविंशाध्याये स्त्रीणां मानसव्यभिचारदोषप्रसंगे चतुर्दिनसाध्यं प्रायश्चित्तं विधत्ते। तद्यथा "मनसा भर्तुरतिचारे त्रिरात्रं यावत्क्षीरोदनं भुञ्जानाऽधश्शयीत ऊर्ध्वं त्रिरात्रादप्सु निमग्ना सावित्र्यष्टशतेन शिरोभिर्जुहुयात् पूता भवतीति विज्ञायते" इति। ननु किमर्थमिदं प्रायश्चित्तविधानं, यावता रजोनिर्गममात्रादेव मनोदुष्टायास्स्त्रियाश्शुद्धिरभ्यधायि। सत्यमुक्ताशुद्धिः। सातु नादृष्टरूपां शुद्धिमाधातुमर्हति। द्विविधाह्यशुद्धिर्मानसदोषेऽपि भवति स्त्रीणां। तत्र मनसा पुरुषान्तरं कामयमानाया भोगातुरमनोवेग प्रक्षुभितं लोहितं स्वस्थानात्प्रच्यवितुमुपक्रमतइतीयमेका अशुद्धिः तथाच रागादपि रजोनिर्गमस्स्मर्यते—

**"रजश्चतुर्विधं ज्ञेयं रोगजं रागजं तथा।**
**धातुजं कालजंचेति योषितां तु बुधोत्तमैः"** ॥ इति।

तथाचरकाचार्यो महर्षिः पतञ्जलिरप्याह चिकित्सितस्थाने —

**"हर्षेणोदीरितं रागात्सङ्कल्पाच्च मनोभवात्।**
**विलीनं घृतवच्छायामोष्मणास्थानविच्युतम्॥**

(अध्या १९—२८) इति।

तेन च निषिद्धाचरणदोषेणासंव्यवहार्यत्वमापादयन्ती दुरितरूपा शास्त्रगम्याद्वितीयाऽशुद्धिः। तत्राद्यापरमशुद्धिः लोहितापरपर्यायस्य

रजसो निस्सरणेन निवर्तते । द्वितीयातूक्तवासिष्ठवचनसिद्धप्रायश्चित्तानुष्ठानेनैव निवर्तनीयेति मानसव्यभिचारेऽपिप्रायश्चित्तमत्यावश्यकमिति मन्यन्ते महर्षयः । लोकेऽपि हि परस्वाद्यपहारिणां स्तेनानां नापहृतस्वादिप्रत्याहरणमात्राच्छुद्धिरिष्यते किन्तु यथापराधं विधीयतएवराज्ञा दण्डोऽपि । एवंच यदेवंजातीयकं वचनजातं प्रमाणमूर्धन्यत्वेनावलम्बमानाःकेचिन्निरङ्कुशमेव स्त्रीणां प्रचारं शास्त्रानुसारेणापि स्थापयितुमन्तरध्यवस्यन्तस्तत्वार्थमिव बोधयन्ति ते शास्त्रार्थमेव बाधन्ते अनादिकालप्रवृत्तिदृढीभूतंचार्यधर्मसेतुं बिभित्सन्ते ।

यदपि कथयन्ति पुराकाले हि स्त्रीणामैच्छिकएव प्रचारआसीत्सर्वत्राऽपि । ताश्च तदा यथेच्छमेव स्वानुगुणं कमपि कमपि पुरुषं भर्तारं स्वयंवरन्यायेन वृण्वानास्सुखमासन् । ततः कालेन सर्वत्र कासुचित्संभावितं पातिव्रत्यविरुद्धामिवापवादवचनं किमपि श्रुतवन्तस्स्युरस्मदीयाःपूर्वे ब्राह्मणाः । ततश्चाधीरास्ते परापवादासहिष्णुतया मानिनो महताऽपि क्लेशेनास्यापवादस्यावकाशप्रसक्तिरेव दूरतो निराकरणीयेति दृढं व्यवस्यन्तः ईदृशानि स्त्रीणां नियमनिर्बन्धशासनानि अकल्पयन्निति । तदपि स्ववासनानुसार्यसदभ्यूहमात्रं । दुर्मेधसां किञ्चिज्ज्ञानांच प्राकृतानां खल्वेषा शैली, यदनादृत्य शास्त्रवचनमवमत्य च वृद्धोक्तानि यथाप्रतिभातं तत्तत्कार्येषु तिरश्चामिव प्रथमतः प्रवर्तनं कालेन च तत्र सत्यनिष्टानुभवे ततो निवर्तनमिति । नतु मनुव्यास वसिष्ठप्रभृतिष्वीश्वरकल्पेषु महर्षिष्वयं स्वभावश्शक्यश्शङ्कितुमपि । ते हि महात्मानो विदितवेदितव्याः प्रत्यक्षधर्माणः ईश्वरानुग्रहात् पुण्यातिशयाच्च विशिष्टज्ञानसंपन्ना नित्यसिद्धमेव वैदिकं धर्मजातमनुशश्वद्-

सुरस्मभ्यं। न ह्यस्मादृशैः क्षुद्रबुद्धिभिस्सहोपमानमर्हन्ति महर्षयो नाम। नखलु क्रीडार्थमप्यशास्त्रीयोऽर्थस्तेषां वाचि संभावयितुं शक्यः। स्मरन्तिहि। —

"धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः।
लीलार्थमपि यद्ब्रूयुस्सधर्मः परमस्स्मृतः" ॥ इति।

अपिचायं तर्ककुशल इदं प्रष्टव्यो भवति। ब्रूहि क्वनामायं भवदूह्यूहो नावकाशं लभते। कळञ्जभक्षणसुरापानमांसभोजनपरदारगमनादिषु सर्वेष्वपिहि निषिद्धेषु कर्मसु शक्यतएव एवमभ्यूहितुं पुरा काले कळञ्जभक्षणादिकं सर्वं बहुळमनुष्ठीयमानमेवासीदृषिभिरपि। ततश्च तत्रतत्र कञ्चिद्दोषमनुभूतवन्तो महर्षयः पश्चादेव तत्तत्कार्यप्रतिषेधमारभन्तस्वशास्त्रेषु इति। अपिच नेयं निषेधशास्त्रमात्रे कल्पना विधिष्वपि शक्या निरूपयितुं। सन्ध्यावन्दनस्नानजपहोमदेवपूजनादिकं सर्वमपि पूर्वं नासीदेव। पश्चात्तु तत्तदनुष्ठातुं प्रवृत्ता ऋषयस्तत्रतत्र कमपि गुणं दृष्टवन्तः पश्चादेव तत्सर्वं कर्तव्यतया स्वग्रन्थेषु व्यलेखिषुरिति। बाढं अस्त्वेवमिति चेत् स्यादेवैतदेवं, यद्यस्मदीयमेव तर्कमनुसृत्य शास्त्राणि नेतव्यानीति स्थितमभविष्यत्। स्थितेच तथा अस्मदूहमात्रेण सर्वव्यवस्थासिद्धौ शास्त्राण्यपि निर्विषयाणि परित्यागमेवार्हेयुः। अभावाद्यस्मादृशस्य तर्ककुशलस्याधुनावधि शास्त्राण्याश्रयितव्यान्यभूवन्, नत्विदानीमपि तान्यावश्यकानि। अपिचैवमस्मदादीनामभ्यूहस्त्रीषु कारुण्याभिनयस्य भूमिकाभूतो न केवलं शास्त्रवैयर्थ्यमात्रे पर्यवस्येत्, अपितु गीतोक्तवर्णसाङ्कर्यमेवास्थनिर्वहणं भवेत्। तस्माच्छास्त्रीयधर्माधर्मविविसेतुमूलोच्छेदहेतुरेवायं तर्काभासइत्यसदेतत्। महतानियमेन महताच प्रयत्नेन नियंत्र्यमाणास्व-

पिहि भूयान् धर्मविपर्ययस्त्रीषु संभवन्ननुभूयते, किमङ्ग वक्तव्यं स्वच्छन्दएव प्रचारे सर्वतस्तासां परिकल्प्यमाने ।

अपिचैवमुपदेष्टारोऽपि मेधाविनः "परोपदेशे पाण्डित्यमि" ति परकीयास्वेव स्त्रीषु स्वच्छन्दप्रचारधर्मोपदेशमाचरन्ति, आत्मीयासु पुनस्त्रीषु विपर्ययाभावहेतोरुक्ताधिकमेव रक्षणाय जागरूकाः प्रयतन्ते न तत्रास्य तत्वोपदेशस्य फलोन्मुखता दृश्यते । आहच मनुः

**समंहि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम् ।**
**यतन्ते रक्षितुं भार्यां भर्तारो दुर्बलाअपि,,** ॥ (९ ६)इति ।

ततश्च अन्तरात्मसाक्षिकएवायमर्थस्तस्य तस्य पुरुषस्य यद्धर्म विपर्ययाभावहेतोः आवश्यकं स्त्रीनियन्त्रणन्नामेति सिद्धम् ।

ताश्च स्त्रियः यथावद्धर्मसिद्धये अग्निसाक्षिकं समन्त्रकंच यथा शास्त्रं विवाहाख्येन कर्मणैव परिग्रहमर्हन्ति नान्यथा । वैवाहिकंच कर्म शास्त्रीयत्वात् यथास्वकालमनुष्ठीयमानमेव धर्मो भवितुमर्हति नान्यकाले । शास्त्रीयाणि हि कर्माणि यथाशास्त्रविहितं कालविशेष मपेक्ष्य क्रियमाणान्येव धर्मा भवन्ति नाकाले । कालश्च द्विविधो मुख्यो गौणश्चेति । तत्र यद्यपि द्रव्यममुख्यं भवति, कालस्तु मुख्यः, तत्र मुख्यएव काले क्रियमाणं कर्म मुख्यं भवति न द्रव्यं गौणमिति कृत्वा कर्मापि गौणं भवति । गौणेतु काले मुख्यद्रव्येण क्रियमाणमपि कर्म गौणमेव भवति न द्रव्यमुख्यतया तस्य मुख्यत्वं । अतएव मुख्य द्रव्यलाभलोभेन मुख्यकालातिपातो न कार्यइत्यादिशन्ति मुनयः—

**मुख्यकालं समाश्रित्य गौणमप्यस्तु साधनम् ।**
**न मुख्यद्रव्यलोभेन गौणकालप्रतीक्षणम्"** ॥ इति । यद्-

तथाच कर्माङ्गेषु बहुविधेष्वपि कालो बलीयान्भवति। तदत्र विवाहाख्येऽपि शास्त्रीये कर्मणि कतमो मुख्यः कालः कतमो गौण इति इदमिह प्राधान्येन विवेचनीयं। तत्रापि साधारणकालापेक्षया विवाहाङ्गभूतयोर्वधूवरयोर्वयोरूपः कालएव तावन्निर्धारणीयः।

यद्यपि वधूंवरंचेत्युभावप्याश्रित्यैव विवाहो नामात्मानं लभते। तथाप्यन्यतरस्यायं नित्योऽन्यतरस्य काम्यो भवति नोभयोस्साधारणः। वध्वाश्चासौ नित्यो भवति वरस्यतु काम्यः। भवन्तिखलु अन्यान्यपि एवंजातीयकानि उभयाश्रितानि भूयांसि कर्माणि। तद्यथा प्रत्याब्दिकादीनि श्राद्धानि यद्यपि कर्तारं भोक्तारंचेत्युभावप्याश्रित्यैव स्वरूपं लभन्ते। तथाऽपि कर्तुरेव तानि नित्यानि अकरणे दोषश्रवणात् स्मरन्तिहि **"मृताहं समतिक्रम्य चण्डालः कोटिजन्मसु"** इति। भोक्तुस्तु सत्यामेव प्रतिग्रहेच्छायां तानि संबध्यन्ते नान्यथेति काम्यान्येव तानि। नहि श्राद्धमभुञ्जानः प्रत्यवैतीति क्वचिदस्ति। तथा एकोपि विवाहो वरं प्रति काम्यः अकरणे दोषाश्रवणात्। नहि विवाहमकुर्वतः प्रत्यवायश्श्रूयते श्रूयतेत्वनाश्रमित्वे।

**"अनाश्रमी न तिष्ठेत क्षणमेकमपि द्विजः।**
**आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते हि सः"** ॥
(दक्ष १ १०) इति।

नहि गार्हस्थ्यमेकमेवाश्रमइति शक्यं प्रतिज्ञातुं चतुर्णामप्याश्रमाणां तुल्यवत्प्रमाणसिद्धत्वात्। कश्चिद्धीरो यावज्जीवमेव ब्रह्मचर्य आश्रममविळ्वेन परिपालयन्नवतिष्ठेत। नहि तस्य किंचिद्धीयेत पुरुषा ब्रह्मलोकफलश्रवणात्। तथाहि छान्दोग्ये **"त्रयोधर्मस्कन्धाः"**

इत्याद्युपक्रम्य "**ब्रह्मचार्याचार्यकुलवासी अत्यन्तमेवात्मानमव-सादयन्नि**" त्याद्युक्त्वा "**सर्वएते पुण्यलोका भवन्ती**" त्युच्यते।

तथाच मनुना स्मर्यते ।

**"यदि त्वात्यान्तिकं वासं रोचयेत गुरोः कुले ।**
**युक्तः परिचरेदेनमाशरीरविमोक्षणात् ॥**
**आसमाप्तेश्शरीरस्य यस्तु शुश्रूषते गुरुम् ।**
**सगच्छत्यञ्जसा विप्रो ब्रह्मणस्सद्म शाश्वतम्** " ॥ इत्यादिना।
**"एवं चरति यो विप्रः ब्रह्मचर्यमविप्लुतः ।**
**सगच्छत्युत्तमं स्थानं न चेहाजायते पुनः"** ॥ (२ २४३)

इत्यन्तेन नैष्ठिकब्रह्मचारिणो ब्रह्मलोकप्राप्तिः । कश्चिदाजान सिद्धवैराग्यः पुरुषधौरेयो ब्रह्मचर्यादेव पारिव्राज्यमाश्रममारोहेत् "**यद हरेव विरजेत्तदहरेव प्रव्रजेत् ब्रह्मचर्यादेवप्रव्रजेदि**"त्यादिश्रुतेः। नहीदृशावधिकारिणावकृतविवाहाविति कश्चिद्दोषस्तयोश्शङ्कितुं शक्यः प्रमाणाभावात् । प्रायेण ह्यधीरा अविरक्ताश्च प्रकृत्या प्राणिनइति भूयांसो विवाहं कामयन्ते। नैतावता सनित्यइति शक्यं वदितुमप्रामाणि-कत्वात् । सर्वेवा कामयन्तां, कोटिष्वेको भवतु तथाविधः । तत्र शास्त्रार्थश्चरितार्थो भवति । काम्येच सति विवाहे यस्य स काम्यो भवति न तस्य तत्र वयोविशेषो नियन्तुं शक्यते, कामनाऽधीनत्वा त् काम्यप्रवृत्तेः, कामनायाश्चानियतकालत्वात्, नह्यस्मिन्नर्थेऽस्य पुरुष स्यास्मिन्नेव काले कामउदेतीति नियमोऽस्ति । तथाच यदा कामयते विवाहं तदैव तं पुरुषोऽर्हतीति न वयोविशेषस्तत्र निमित्तं । काम-नायां सत्यामपितु पुंसः क्वचन कालविशेषे स निषिध्यते "**पञ्चाशद्ध-**

त्सरादूर्ध्वं न कुर्यात्पाणिपीडनमि"ति। अकामनायां तु काम-माश्रमान्तरप्रतिपत्तिरेव युक्ता। तथाच स्मर्यते।

"गार्हस्थ्यमिच्छन् व्रतिकः कुर्याद्दारपरिग्रहम्।
ब्रह्मचर्येण वा कालं नयेत्संकल्पपूर्वकम्॥
वैखानसोवापि भवेत् परिव्राडथवेच्छया"। इति।

तस्माद्वरवयोविशेषनिर्णये नाधिका विप्रतिपत्तिरिति वध्वाएव तावत् स निश्चेतव्यो भवति। तां प्रति विवाहस्य नित्यत्वात्।

नित्योहि विवाहस्स्त्रीणां, उपनयनस्थानीयत्वात् (१) अकरणे दोषश्रवणाच्च: (२) विवाहोहि स्त्रीणामुपनयनाख्यसंस्कारस्थाने शास्त्रेषु विधीयते। तथाहि मनुः स्त्रीणां जातकर्मादीनि यथाकालं यथावच्चामन्त्रकं कार्याणीत्यभिधाय विवाहाख्यं कर्मैव तासामुपनयन स्थानीयं समन्त्रकं चेति विधत्ते।

अमन्त्रिकातु कार्येयं स्त्रीणामावृदशेषतः।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्॥
वैवाहिको विधिस्स्त्रीणां संस्कारो वैदिकस्स्मृतः,।
"पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया"॥

(२ ६१) इति।

न चात्र विवाहस्य स्त्रीषु वैदिकसंस्कारत्वमात्रमभिधीयते नोपनयनताऽपीति शंक्यं। यतः पतिसेवागृहकृत्ययोः गुरुकुलवासाग्निपरिचरणस्थानीयतां निरूपयति सएव। अपिचानन्तरश्लोकेन स्पष्टमेतदाह "एषप्रोक्तो द्विजातीनामौपनायनिको विधिः। उत्पत्तिव्यञ्जकः पुण्यः" इति। यदि स्त्रीणामुक्तो विवाहउपनयनत्वेनाभिमतो

न स्यात्, तदा कथमस्य उपनयनविधित्वेनोपसंहारो युज्येत। कथंचवास्य जात्यभिव्यंजकतावचनमुपपद्येत। ब्रह्मचारिप्रकरणे याज्ञवल्क्योपि एवमाह "तूष्णीमेताः क्रियास्स्त्रीणां विवाहस्तु समन्त्रक" इति। तथा उक्तमनुवचनानुवादेन स्पष्टमाह व्याघ्रपादः "स्त्रीणामुपनय स्थाने विवाहं मनुरब्रवीदि"ति। पितामहोप्याह "विवाह एवोपनयस्स्त्रीणां वैदिकइष्यते" इति। उक्तपितामहवचनानुवादेन यमोप्याह "विवाहंचोपनयनं स्त्रीणामाह पितामह" इति। तथा बोधायनः तच्छेषसूत्रे

पुत्रायच दुहित्रेच समाना ब्राह्मणी क्रिया। इत्याद्युक्त्वा
वैवाहिको विधिस्स्त्रीणामौपनायनिकस्स्मृतः ॥

(१—१६) इत्याह।

उपनयनंच द्विजातीनां नित्यमेवानुष्ठेयमिति प्रसिद्धं। तेनैवाहि कर्मणा द्वितीयजन्मवत्वरूपं द्विजत्वं सिद्ध्यतीति शास्त्रसिद्धान्तः।

तथाच याज्ञवल्क्यः—

"मातुर्यदग्रेजननं द्वितीयं मौञ्जिबन्धनात्।
ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजातयः" ॥ (१—३९)

इति। मनुरपि—

"मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने।
तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनात्" ॥

(२—१६९) इत्युक्तमर्थमाह।

तथाच यथैव पुमांसो बालकाउपनयनकर्मणा यथावदवश्यं संस्क्रियन्ते असंस्कारे ब्राह्मण्यस्यैवाभावप्रसंगादिति एवं द्विजातिकुली

नाः कन्यकाअपि अवश्यमुपनयनस्थानापन्नेन विवाहकर्मणा संस्कर्तव्याएव भवन्ति। यास्तु पुनर्विप्रकुलीनाअपिस्त्रियो नैतादृशेन विवाह कर्मणा संस्क्रियन्ते ताः ब्राह्मण्यादेव हीना भवन्ति। तस्मात्स्त्रीषु ब्राह्मण्यसिद्धेरेव मूलभूतत्वात् विवाहो नित्यएव भवितुमर्हति नजातुचिदैच्छिकः। पुंसां पुनर्विवाहातिरिक्तेन उपनयनेनैव ब्राह्मण्यसिद्धे र्भवति विवाहः कामनाऽधीनः। (१)

अतएवासंस्कारे ब्राह्मणकन्यानां दोषस्स्मर्यते। स्मर्यमाणश्च दोषो द्विप्रकारो भवति कन्यासंस्कारकर्मणि कर्तृभूतानां तत्पित्रादीनां कश्चित्, कश्चित्तु संस्कर्तव्यानां स्त्रीणामेव, । तत्र पित्रादीनां यथा "कालेऽदाता पिता वाच्यः" (९—४) इति मनुश्शास्त्रीये काले कन्यकामदातुः पितुर्वाच्यत्वमाह। वाच्यत्वंच तस्य निंद्यत्वमेव। निन्दाचात्र न केवलं कतिपयलौकिकजनवार्तामात्रात्, अपितु अधर्माचरणजनितः पापरूपो दोषएव। सच दोषः कियान्, केनवा पापेन संमितः, इतितु विशेषांशमिदंतया मनुर्ननिरूपयति। स्मृत्यन्तराणितु दोषमिममदातॄणां पित्रादीनामीदृशतयाऽपि निरूपयन्ति। तथाहि याज्ञवल्क्यः—

"पिता पितामहो भ्राता सकुल्यो जननी तथा।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः" ॥

(१—६३) इति

कन्यादानाधिकारिणः पित्रादीन् क्रमेण निर्दिश्य तेषां कन्यादानमकुर्वतां दोषमिदंतयाऽप्याह "अप्रयच्छन्समाप्नोति भ्रूणहत्या

मृताव्रतौ" इति। स्मृत्यंतरवचनान्यपि एवंजातीयकानि भूयांसि परस्तात् प्रदर्शयिष्यामः।

अत्राहुः परे। "सत्यमुच्यते कन्यकादानमकुर्वतां तदधिकारिणां भ्रूणहत्यापापप्राप्तिस्स्पष्टं स्मृत्यन्तरेषु। मनुस्तु सामान्यतएव कंचिद्दोषमिहाभिप्रैति न तादृशमधिकमिति गम्यते, यतोऽयं "वाच्य" इत्येतावन्मात्रमेवाह न पुनरधिकं। नच स्मृत्यन्तरेण एकवाक्यतया मनुवचनस्यापि तावद्दोषपरत्वकल्पनं युक्तं, एकवाक्यताया अनावश्यकत्वात्, असंभवाच्च। नहि स्मृतिवचनानां सर्वेषामेकवाक्यतयैवार्थकरणमावश्यकमिति निर्बन्धेप्रमाणमस्ति। न संभवत्यपिखलु एकवाक्यता सर्वत्रापि, भिन्नकालिकत्वात् भिन्नार्थत्वाच्च। मनुर्हि स्मर्तृषु प्राचीनइत्यविवादं। अन्येचार्वाचीनाएव स्मर्तारः। तत्रैवंसति प्राचीनेन मनुना स्वकालस्थितवैवाहाद्याचारव्यवस्थाप्रदर्शनाय लिखितस्य वचनस्य तदर्वाचीनकालिकव्यवस्थाप्रदर्शकेन स्मृत्यन्तरवचनेन कथमेकवाक्यता घटतां। अर्थभेदश्चानयोस्स्फुटतरः, एकत्र दोषसामान्यं अन्यत्रोत्कटो दोषो भ्रूणहत्यारूपः। तस्मादर्वाचीनानां याज्ञवल्क्यवसिष्ठबोधायनवामदेवभरद्वाजांगिरःप्रभृतीनामेवायमदातरि कन्यापितरि भ्रूणहत्याद्युत्कटदोषप्रवेशो विपरीतयुक्तिवादमूलकः, नत्वयं पुरातने मनावपि शक्यश्शंकितुम्" इति।

अत्रेदं वक्तव्यं कथं तावन्मनोरन्येषांच स्मर्तृणां कालतः पौर्वापर्यमध्यवसितमायुष्मता, ननु च मनुस्मृतावेवादितः मरीचिवसिष्ठाङ्गिरःप्रभृतयो मुनयस्तपोविशेषान्मनुनैव सृष्टाइत्युपाख्यायते—

"अहं प्रजास्सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम् ।
पतीन्प्रजानामसृजं महर्षीनादितो दश ॥
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
प्रचेतसं वसिष्ठंच भृगुंनारदमेवच" ॥ (मनु १–३९) इति।

एतस्मात्कारणादङ्गिरःप्रभृतिभ्यस्तत्पितृभूतो मनुः प्राचीनएवे त्यध्यवस्यामः । अस्तु मनुः प्राचीनः, स्मृतिरप्येषा स्मृत्यन्तरेभ्यः पूर्वमेव लिखितेति कथमध्यवासासीः । ननु नायन्निर्णयो हेत्वन्तर मपेक्षते । मनोः प्राचीनत्वे सिद्धेहि तत्स्मृतिरपि प्राचीनैवेति सिद्ध मेव । यद्यप्येवं मन्यते भवान् । वयन्तु मन्यामहे अङ्गिरःप्रभृतीनां स्मृतिभ्योऽर्वाचीनैव मनुस्मृतिस्यादिति, यतस्तेषां चरित्राणि तत्रतत्र अंशतो मनुस्मृतावनूद्यंते । द्वितीयाध्यायेहि योऽयमङ्गिरसः पुत्र आंगिरसः तत्कृतमध्यापनमनुवदति पुरावृत्तत्वेन मनुः—

"अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः ।
पुत्रकाइतिहोवाच ज्ञानेन परिगृह्य तान्" ॥

(२--१९) इत्यादिना ।

अनेनचाङ्गिरःपुत्रकालापेक्षयाऽपि अर्वाचीना पूर्ववृत्ततच्चरित्रा नुवादिनी मनुस्मृतिरिति स्थिते अङ्गिरःकालादपि प्राचीना मनुस्मृति रिति भवदभ्यूहस्य कुतोऽवकाशलाभः । तथा दशमेऽध्याये वामदेव भरद्वाजविश्वामित्राणामापत्कालिकमितिवृत्तं स्वोक्तार्थसंवादार्थमन्वाचष्टे

मनुः "श्वमांसमिच्छन्नार्तोऽत्तुं धर्माधर्मविचक्षणः ।
प्राणानां परिरक्षार्थं वामदेवो न लिप्तवान ॥

**भरद्वाजः क्षुधाऽऽर्तस्तु सपुत्रो विजने वने ।**
**बह्वीर्गाः प्रतिजग्राह पृथोस्तक्ष्णो महातपाः ॥**
**क्षुधाऽऽर्तश्चात्तुमभ्यागात् विश्वामित्रश्श्वजाघनीम् ।**
**चण्डालहस्तादादाय धर्माधर्मविचक्षणः" ॥**

(मनु १०—१८) इति ।

नहि वामदेवादिकालात्पूर्वमेव कृते ग्रंथे तेषां चरित्रस्यातीतत्वेनानुवादो भागी भवति । किंचात्र "धर्माधर्मविचक्षण" इतिविशेषणं प्रयुञ्जानो मनुः तेषां स्मर्तृत्वमपि पूर्वसिद्धमनुवदति । विपूर्वोहि चक्षिर्व्याख्यानकर्मा "येनस्तद्विचचक्षिरे" (ईशोपनिषदि मंत्र १४) इत्यादौ प्रयोगदर्शनात् । तथाच धर्माधर्मयोः विचक्षणः व्याख्याता स्मृतिप्रणेताऽपि सन्नित्यर्थः । ऋषीणां धर्माधर्मव्याख्यातृत्वंहि धर्माधर्मबोधकस्मृतिकर्तृत्वरूपमेव । तथाच वामदेवादीनृषीन् धर्माधर्मव्याख्यातॄननुवदन्ती मनुस्मृतिस्तत्स्मृतिभ्योऽर्वाचीनैवेति स्पष्टमवगम्यते । तस्मात्स्मृतिषु त्वदभिमतरीत्या प्राचीननवीनभावकल्पनं दुस्साधं विपरीतवासनामूलकंच ।

अस्तुवा मनुस्मृतिस्सर्वतः प्राचीनैव । तथाऽपि तत्र मनुस्स्वकालस्थितधर्मानुष्ठानप्रकारमेव संजग्राहेतिकथमवेदीः । स्मृतिर्हिसा नेतिहासः । नहि स्मृतयइतिहासमध्ये क्वचित्परिगण्यन्ते । नवा कस्यचित्पुरुषविशेषस्यइतिवृत्तं धर्माधर्मादिरूपमैतिह्येन ता बोधयन्त्यो दृश्यन्ते । विशकलितवेदार्थसंग्रहरूपास्स्मृतयइतिहि डिण्डिमाघातः । प्रसिद्धो ह्ययमर्थः काव्यपथेष्वपि "**श्रुतेरिवार्थं स्मृतिरन्वगच्छत्**,, (रघु २) इत्यादौ । आदितएव स्पष्टमेतदाह मनुः—

"यःकश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥
सर्वंतु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा ।
श्रुतिप्रामाण्यतो विद्वान् स्वधर्मे निविशेत वै ॥ (२–८) इति ।

एवमादितएवात्र प्रतिपाद्यमानोऽर्थःकात्स्न्र्येन वेदोदितएव नान्यमूलकःकश्चिदपीति प्रतिज्ञापूर्वकं प्रवृत्ता या मनुस्मृतिस्सा मनुकाले लोकस्थितमेवार्थं समग्रहीदितिकुतोऽयमपूर्वोपदेशो गृहीतो मेधाविना। नहि तत्तत्कालिकलौकिकचरित्रसंग्रहणाय प्रवबृतिरे महर्षयः । धर्माधर्मस्वरूपतत्फलतदधिकार्यादिनिरूपणायहि प्रावर्तन्त मुनयः । नहि धर्माधर्मादिकं लौकिकोऽर्थः "चोदनालक्षणोऽर्थोधर्मः" इति न्यायात् । स्मृतयोहि धर्मशास्त्रं "धर्मशास्त्रंतु वै स्मृतिः" (२— १०) इति मनुनैवोक्तत्वात् । धर्मशास्त्रभूतासुच स्मृतिषु तत्तत्कालिकलोकस्थितार्थनिरूपणमेव क्रियतइति अत्यन्तविपरीतमिदंग्रहणं ।

एतेन स्मृतीनां भिन्नार्थत्वादेकवाक्यता न संभवतीत्यपि परास्तं, एकमूलकत्वात् स्मृतीनामेकार्थत्वोपपत्तेः । एकमेवहि नित्यसिद्धं वेदं तपोविशेषादीश्वरानुग्रहाच्च मूलमुपलब्धवन्तो महर्षयस्तदनुभावितमर्थमस्मार्षुस्तत्रस्तत्र स्मृतिषु । नहि वेदार्थः कालभेदाद्विभिद्यते, नवा तत्र प्रकारभेदो भवति, मनुकालेहि वेदस्य कश्चिदर्थआसीत्, तदनन्तरकालेच तस्यैवार्थान्तरं, ततःपश्चाच्च ततोऽर्थान्तरमिति । एक एवहि वेदार्थस्सर्वत्रापि । एकस्यहि वाक्यस्य एकएवार्थो नार्थान्तरं। अर्थान्तरन्तु प्रतीयमानं बुद्धिभेदात्प्रतीयेत । बुद्धिभेदश्चायं नास्मादृश क्षुद्रजनबुद्धिबलावष्टम्भेन स्मृतिप्रणेतृष्वारोपयितुं शक्यते । स्मृतय

स्तु ऐकरूप्येणैव वेदार्थं प्रत्याययन्ति । यद्यपि वेदार्थो धर्मो बुद्धिदोषादनुष्ठातृभिर्यथास्वाभिमतमन्यथानुष्ठीयेत कालविशेषे, तथाऽपि नायं मुख्यो धर्मो भवति नवा तदवबोधनाय स्मृतयः प्रणीयन्ते । अन्यथाऽनुष्ठानेच तत् फलाय न प्रकल्पेत । लौकिकेषुत्वर्थेषु गृहप्रासादोद्यान शयनकटासनाभरणप्रभृतिषु कालभेदात्प्रकारभेदेऽपि फलोपयोगिता कथंचित्संपाद्येतापि न पुनरेषा नित्यसिद्धे वेदार्थे धर्मे। स्मृतयश्च नित्य सिद्धमेव वेदार्थमभिदधाना दृश्यन्ते, न पुरुषबुद्धिभेदाद्भिद्यमानं धर्म विप्लवं निरूपयितुं प्रवृत्ताः । क्वचित्तु अधुनातनानामप्रमादाय फलाय प्रबलेष्वपि संभावितो धर्मविप्लवो निरूप्यमाणो निरूप्येत । तच्च त्वदभिमतं मूलतएव निकृन्तति । इहचादातरि कन्यापितरि दोषवचने स्मृतिवचनानां नार्थभेदश्शक्यो निरूपयितुं । यथाहि पितृश्राद्धमकुर्वाणमेकमेव पुरुषमुद्दिश्य कश्चिद्दुष्टोयमिति अपरस्स्वधर्मत्याग्ययमिति अन्यः पितृश्राद्धपरित्याग्ययमितिच भेदेन वदन्तोऽपि न भिन्नाभिप्रायास्स्युः, तथा काले कन्यादानमकुर्वाणं तत्पितरं कश्चिद्दर्षिर्निन्द्योयमित्याह यथामनुः

"कालेऽदाता पिता वाच्य" इति । कश्चिद्दुष्टइत्याह यथा-वसिष्ठः, **"ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति"** (१७ ६२) इति । कश्चित्भ्रूणहत्यावानित्याह ; यथा याज्ञवल्क्यः, "अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ" (१·६४) इति । न ह्येते विरुद्धाभिप्रायाइति शक्यं वदितुं । किंच सामान्यरूपेण दोषवादिन्यस्स्मृतयो विशेषपर्यवसानं स्वयमेवाकाङ्क्षन्ति, सामान्यस्य विशेषनिष्ठत्वात्, दोषपरिजिहीर्षोरास्तिकस्य विशेषरूपेण ज्ञानमन्तरेण

प्रायश्चित्तनिश्चयस्यासंभवाच्च ॥ क्वचित्तु सामान्येन दोषमभिधाय तद्विशेषरूपजिज्ञासायां तत्रैव स्मृतावनन्तरं तदपि निरूप्यते यथा वासिष्ठस्मृतौ **"ऋतुमत्यां हि तिष्ठंत्यां दोषः पितरमृच्छती"** ति सामान्येनाभिधाय अनन्तरं

**"यावन्च कन्यामृतवस्स्पृशन्ति कुल्यैस्सकामामभियाच्यमानां । भ्रूणानि तावन्ति हतानि ताभ्यां मातापितृभ्यामिति धर्मवादः" ॥**

इति दोषविशेषस्वरूपमप्युच्यतएव । यातु स्मृतिर्दोषसामान्य-माह विशेषंच न विवृणोति तत्र दोषविशेषबोधकस्मृतिसाकाङ्क्षत्वा-देकार्थत्वाच्च च्छागपशुन्यायेन तस्यास्स्मृतेर्विशेषबोधकस्मृतिभिरेक-वाक्यत्वमवश्यवक्तव्यं **'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभा-गेस्यात्'** इति जैमिन्युक्तन्यायात् । तस्मादीदृशेषु वचनेष्वर्थभेदं परि-कल्प्य मनुरन्याभिप्रायः अन्येचान्यथामन्यन्ते तस्य ह्यत्र भ्रमः अयंतु यथार्थवादी, इत्यादिदुरभिप्रायभेदकल्पनं शास्त्रार्थनिर्णयसंप्र-दायानभिज्ञानां प्राकृतानामेव शोभते नात्र पदवाक्यप्रमाणविदः पण्डिता मुह्यन्ति । सर्वथाऽपितु कन्यादानमकुर्वतः पितुर्दुष्टत्वाभिप्रा यस्सर्वेषां स्मृतिकृतां साधारणइत्ययमर्थो न प्राकृतेनापि निह्नोतुं शक्य ते । अलंच तावन्मात्रमेव प्रमाणं स्त्रीणां नित्यो विवाहइत्यत्रार्थे । नहि कन्याविवाहस्य काम्यत्वे तदकरणे दोषवचनं समञ्जसं भवति । नहि काम्यानि कर्माण्यकुर्वाणस्य क्वचिद्धर्मशास्त्रे निन्द्यतोच्यते । अकरणे निन्दावचनं च कर्मणो नित्यत्वे प्रमाणं । परमार्थतस्तु अष्टमवर्षरूपमु-ख्यकालमात्रोल्लङ्घने सामान्यतो दोषमाह मनुः यतोऽयं "कालेऽदाते"

---

१ यत्तुपराशरमाधवीये स्मृतीनामेकवाक्यत्वं नास्तीत्युक्तमिति तत्भ्रान्तिमात्रं

त्याद्याह । ऋतुपूर्वकालरूपगौणकालस्याप्युल्लङ्घनेतु भ्रूणहत्यारूपमुत्कटदोषमाहुस्स्मृत्यन्तराणीत्ययमत्रनिष्कळङ्कश्शास्त्राभिप्रायइति पण्डिता मन्यन्ते ।

तथा संस्कार्याणां कन्यानामसंस्कारे दोषस्स्मर्यते

**"पितुर्गेहेतु या नारी रजः पश्यत्यसंस्कृता" ।**
**भ्रूणहत्या पितुस्तस्यास्सा कन्या वृषळी मता" ॥** इति ।

अधिकमत्रोपरिष्टान्निरूपयिष्यते। तस्माद्ब्राह्मणकुलीनानां कन्यानामपि पुंसामिव विवाहः काम्यएवेति न शक्यं कल्पयितुं । अविवाहितानां ब्राह्मण्यस्यैवासिध्या स्वजातिभ्रंशापत्तेर्दुष्टत्वस्मरणाच्च नित्यएव स्त्रियं प्रति विवाहइति सिद्धम् ।

अत्र केचिदूहकुशलाः कल्पयन्ति । ऋषिकुमारिकाहि बह्वो विवाहमलभमानाएव तपस्तेपुरित्युपाख्यायते महाभारते। यदि विवाह स्त्रीणां नित्यस्स्यात् कथं तास्तमकुर्वाणाएवावर्तन्त । तत्पितरोवा मुनयः कथमभिज्ञास्सन्तोऽपि न ततो बिभयांबभूवुः । अत्यन्तवार्धके च सुभ्रूर्नाम काचिदृषिकन्या विवाहमात्मनः कारितवतीति शा[illegible]ण्युपाख्यायते । कथमेवमस्मदीयानां पूर्वेषां चरितमासीत् । यदी[illegible] चरितमशास्त्रीयं स्यात् तदा भगवान् बादरायणः किमर्थमिदमपचरितं महता ग्रन्थेन स्वयमुदाहार्षीत् । वरंहि ईदृशग्रन्थलेखनापेक्षया कार्यान्तरमेवहि तस्य । तस्मात्पुरा काले स्त्रीणां विवाहः काम्यएवासीत्, अथावश्यकस्सइति निर्बन्धकरणेऽपि ऋतोःपरमेव कदाचित्स कर्तव्यइतिच निश्चीयतइति ।

(१) अत्रोच्यते । सत्यं काश्चन कन्यकाअविवाहिताएव तप स्यन्तिस्मेत्युपाख्यायते । कथमेतावता तथाविधएवाचारस्सार्वत्रिकः पुरा कालइति शक्यं निश्चेतुं । नखलु प्राणिविशेषस्यान्यथाचरणमात्रं सार्व लौकिकमिति युक्तं परिग्रहीतुं ।

(२) अपिच उपाख्यानमात्रमेतद्भवति । न विधायकं । उपाख्यानानिच प्राणिविशेषस्य चरित्राणि परं यथाभूतमनुवदन्ति "इदं चरित्रमेवं वृत्तमिति" न पुनरेषां धर्मत्वाधर्मत्वयोरपि व्याप्रियन्ते । तयोस्तु प्रमाणं विधिशास्त्राण्येव । उपाख्यानसिद्धान्यपि चारित्राणि यदि विध्यनुसारीणि स्युस्तदा भवन्त्युपादेयानि । अन्यानितु हेयानि भवन्ति अधर्मरूपत्वात् न तत्र पुरुषविशेषगौरवमाद्रियते । लौकिका न्यपिहि महापुरुषानुष्ठितान्यपिच उत्कोचग्रहणप्रभृतीनि कर्माणि नीतिशास्त्रविरुद्धानि निराक्रियन्ते, किमु वक्तव्यमतीन्द्रियार्थे धर्मे । तथाच श्रुतिराचार्यवचनस्वरूपा शिष्याननुशास्ति "यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणि (तै २) इति । स्मृतिष्वप्याचारस्य विध्यनुसारिणएव ग्राह्यत्वं न तद्विरुद्धस्येति स्पष्टं । तस्मान्नित्यतया शास्त्रसिद्धस्स्त्रीविवाहो नैवंविधकतिपयकन्यकाजनो पाख्यानबलावष्टंभेन काम्यइति शक्यमन्यथयितुं ।

(३) यदपि कन्यापितरोवा कथमभिज्ञास्सन्तो नित्याय विवाहकर्मणे न प्रावर्तन्तइति, तदसत् । नहि ते न प्रावर्तन्तेत्युपाख्यायते । किन्तु प्रवृत्ताअपि ऋषयः प्रबलेन कन्यकायाः प्रतीपाध्यवसायेन न दातुं प्राभवन्त । तदुक्तं वृद्धकन्योपाख्यानएव भारते शल्यपर्वणि "सा पित्रा दीयमानाऽपि पतिं नैच्छदनिन्दिता" । (अध्या

९३—७) इति। पितृधर्मश्चावश्यकं कन्यादानकरणमिति इममर्थं न महर्षयो जातुचिदन्यथाकुर्युः।

अपिच कन्यकाच सुभ्रूर्न विवाहमनावश्यकमभिप्रयती पितुर्दानं निराचकार किन्तु आत्मनः कामनाऽनुगुणगुणसम्पन्नःपतिर्नास्तीति कृत्वा। तदेतदुच्यते तत्रैव **"आत्मनस्सदृशं सातु भर्तारं नान्वपश्यत"**। इति। तथाच विज्ञायते आवश्यकमपि विवाहं स्वमनोरथानुगुणपतिलाभकामनावेशेन परं सुभ्रूर्नाङ्गीकृतवती, न त्विदं कर्मैवानावश्यकमितीति। कामनामूलकंच चरितं राजसतया गीतायामुक्तत्वेनासच्चारित्रतया कथंनु नाम धर्मगोष्ठ्यां परिगण्येत। धर्मबुद्ध्या शिष्टैरनुष्ठीयमानस्याचारस्यैव प्रमाणत्वात्। नहि विवाहाकरणमात्मनो धर्मइति बुद्ध्या सुभ्रूस्तथा स्थितवती, किंतु स्वेच्छानुगुणवरालाभादितिहि उपाख्यायते। तत्कथं दुराशामूलकं तस्याश्चरितं धर्मे प्रमाणं स्यात्। अतएवप्रायेण दृष्टकामादिमूलकत्वसंभवेन आचारस्य पृथक्प्रामाण्यमेव नास्तीति निराकृतं भगवता भट्टपादेन—

**"दृश्यमानान्यहेतुत्वान्नात्र शास्त्रप्रमाणता।**
**तस्मादर्थसुखाङ्गत्वान्नाचारेष्वस्ति धर्मता॥**
**वेश्यानां सेवकानांवा वैद्यानां नगरेषुवा।**
**चरित्राणां यथाचार्थसुखाङ्गत्वं तथाऽस्त्विह।**
**तस्माच्छ्रुतिस्मृती एव प्रमाणं धर्मगोचरे"॥**

(जै. १—३—७) इति॥

(९) अपिच। अतिमानुषशक्तिकाहि सुभ्रूः। न तस्याश्चरितमस्मदीयाः कन्यकाअनुकर्तुं शक्नुवन्ति। साहि विनैव गर्भवासादिकं कुणिनाम्ना महर्षिणा तपःप्रभावादेवोत्पादिता, तदुक्तं तत्रैव—

"ऋषिरासीन्महावीर्यः कुणिर्गार्ग्यो महायशाः ।
स तप्त्वा विपुलं राजन् तपो वै तपतां वरः ॥
तपसाऽथ सुतां सुभ्रूं समुत्पादितवान्विभुः" । इति ।

सा चात्मनस्तपोमाहिम्ना क्षणेन युवतिः क्षणेनच कन्यका क्षणाच्च जरठा अथान्यथाच भवितुं शशाक, तथाच वर्ण्यते—

"सा रात्रावभवद्राजन् तरुणी वरवर्णिनी ।
दिव्याभरणवस्त्राच दिव्यगन्धानुलेपना,, ॥ इति ।

नहि मानुषीणां कन्यकानामेवंविधो महिमा जातुचिदुपपद्यते । तस्मात्तच्चरित्रदृष्टान्तेनास्मदादिकन्यकानामाचारव्यवस्थापनं न कदाचिदपि घटते ।

(६) अपिच तथाविधमहिमशालिन्याअपि सुभ्रुवो विवाहाकरणदोषात्परलोकएव नास्तीति अन्ततो भगवान्नारदश्शिक्षयांबभूव

असंस्कृतायाः कन्यायाः कुतो लोकस्तवानघे ।
एवन्तु श्रुतमस्माभिर्देवलोके महाव्रते ॥
तपः परमकं प्राप्तं नतु लोकास्त्वया जिताः" । इति ।

नारदवचनाच्च वेपमाना सुभ्रूरात्मसंभृते तपस्यर्धं भागं पारितोषिकमर्पयन्ती कथंचित् कंचिदृषिं परिणीयैव लोकान्तरमगमदिति स्पष्टमुद्घुष्यते । तथाच अनन्यसाध्यतपोविशेषसंपन्नाममानुषशक्तिकां सुभ्रुवं प्रत्यपि यस्य विवाहस्याकरणमात्रात्सत्यपि परमे तपसि "न ते लोकान्तरमस्ती"ति महर्षिर्नारदो धीरं जगर्ज, तदुपदेशाच्च तत्तादृशमहिमाऽपि सुभ्रूः न केवलं चकम्पे, कम्पमानाच आत्मनस्तपोऽर्धं विवाहे शुल्कमावोप्य तत्कामिनं कंचिदृषिं विवाह्यैव लोकान्तरमगम-

त्, यस्यच विवाहस्याकरणेनापतितां न्यूनतां तादृशमपि तपो न परिहर्तुं समर्थतामापेदे, तादृशो विवाहस्स्त्रीणामत्यन्तनित्यइत्यत्र किमन्यद्वक्तव्यमस्ति । तथाचेदं वृद्धकन्योपाख्यानमेकमेव मूर्धाभिषिक्तं प्रमाणं भवति, स्त्रीणां विवाहो नित्यइत्यत्रार्थे । स्थिते चैवं वस्तुतत्वे यदिदमेवोपाख्यानमवलम्ब्य स्त्रीणां विवाहः काम्यइत्यस्यार्थस्य साधनार्थमुद्घोषणं तदत्यन्तबालिशानां साहसमेवेति बोध्यं । यदपि आवश्यकोऽपि विवाहः ऋतोः परस्तादेव कार्यइत्यस्मादाख्यानात् प्रतीयतइति तदसाधु, तपोमहिम्ना विवाहार्हवयसिस्थित्वैवतया विवाहकरणात् । विस्तरेणचैतदुपरिष्टादुन्मथिष्यते । एतेन व्यासस्यापि किमर्थः ईदृशोपाख्यानलेखनप्रयासइति सपरिहासो मूर्खानुक्रोशस्समाहितो भवति वस्तुतत्वमविज्ञाय ज्ञानाभासमात्रेण कतिपयाचारबलमवष्टभ्य विवाहस्य स्त्रीष्वैच्छिकत्वादिस्थापनार्थमुज्जृम्भमाणानां भवादृशानां त्वदभिमतमूलादेव त्वदीयसंरम्भध्वंसनार्थमीदृशोपाख्यानलेखनस्य अत्यावश्यकत्वात् । एतेन उपाख्यानान्तराण्यपि व्याख्यातानि । तेषामपि अविधायकत्वात्, कामादिमूलकत्वेनराजसचरितत्वात्, अमानुषशक्तिकजनाचरितत्वात्, अन्ततोविधिविहितार्थपर्यवसायित्वात्, । अपिच स्त्रीणां विवाहो नित्यइति नायमर्थश्श्रुतिस्मृत्यादिगवेषणामपेक्ष्यैव विज्ञातव्यः । प्रसिद्धो ह्ययमर्थः काव्यपरिशीलनवतां बालकानामपि यदाह प्रामाणिकः कविः कश्चिदृषिरूपकेण "**अर्थोहि कन्या परकीयएव**" इति । तस्मात्सिद्धं स्त्रीषु विवाहो नित्यइति ॥

नित्येच सति विवाहे स्त्रीणां कतमस्मिन्वयसि स मुख्यः, कदाचायमशास्त्रीयइति, इदमिदानीं विचारणीयं । तत्र ऋतोः परमेव वयो ब्राह्मणस्त्रीणां विवाहकर्मण्यङ्गभूतो मुख्यः कालः, नातःप्राची

नमिति श्रुत्यादिसिद्धो अर्थइति अधुनातना मेधाविनः। गर्भाष्टममेव वयो मुख्यः कालः, ततःपरस्तात् ऋतोः पुरस्ताच्च गौणः कालः, ततः परंतु विवाहकरणमशास्त्रीयमेव सर्वथेति सांप्रदायिका मन्यन्ते ॥

अत्रायमाधुनिकानामुद्घोषः, प्रथमं तावत्प्रमाणमूर्धन्यभूतां श्रुतिमेवात्र परामृशामः। येतावन्मन्त्रा वैवाहिकेषु कर्मसु अङ्गतया शास्त्रेषु विनियुक्ताः, ते विचार्यमाणाः स्त्रीणां विवाह्यमानानां युवतिभावमेव निर्धारयन्ति। यदि मन्त्रा अर्थवन्तस्स्युः, यदिवा कर्मसंबन्ध्यर्थप्रकाशनमुखेनैव मन्त्राणां कर्मसूपकारता, सर्वथा नायमर्थो निराकर्तुं पार्यते। तथाहि मन्त्रलिङ्गान्यनुक्रमिष्यामः।

(१) आदितएव विवाह्यमानायाः कुमार्याअवयवशो निरीक्षणे कर्मणि विनियुक्तः "**अघोरचक्षुरि**"त्यादिर्मन्त्रः। सच वध्वास्तात्कालिकीं प्रौढावस्थामेव प्रत्याययति। तत्रहि वध्वास्सम्यग्दर्शनं सौमनस्यं देवकार्यकामना भर्तृसंबन्धिप्राणिसामान्यसुखकरत्वं चाभिधीयते। नहीदं सर्वमप्रौढावस्थया बालिकया विज्ञातुमपि शक्यं, दूरे तु तस्यास्तत्फलोपयोगिता। तस्मादुक्तार्थयोग्या विवाह्या वधूर्युवतिरिति गम्यते।

(२) तथा कन्यावियोगासहनेन तद्बन्धुजनोत्कण्ठायां जप्यो मन्त्र आलिङ्गनार्थत्वं विवाहस्य स्पष्टमाह। नह्यप्रौढाविवाहे तदा तदालिङ्गनं घटते।

(३) "शन्ते हिरण्यमि" त्यादिमन्त्रे "मया पत्या तन्वं संसृजस्वे"ति कुमार्याः पतिशरीरसंसर्गउच्यमानस्तद्योग्यामृतुमतीमेव कन्यां व्यवस्थापयति ॥

(४) अन्यच्च मूर्धाभिषिक्तं लिङ्गं **"सोमःप्रथमो विविद"** इत्यादिमन्त्रोक्तं। तत्रहि मन्त्रे सोमगन्धर्वाग्निमनुष्याश्चत्वारोऽपि क्रमेणोत्तरोत्तरं कन्यकानां पतयो दातारश्च भवन्तीति प्रतिपाद्यते। सोमादयश्च त्रयोऽपि देवाः क्रमाद्योनिरोमकुचरजःप्रादुर्भावकालेषु स्त्रीणां भवन्ति भोक्तारइति स्मर्यते स्मृतिषु

**पूर्वं स्त्रियस्सुरैर्भुक्तास्सोमगन्धर्ववह्निभिः ।**
**भुज्यन्ते मानुषैः पश्चात् न ता दुष्यन्ति कर्हिचित् ॥**
**व्यञ्जनेषुच जातेषु सोमो भुङ्क्तेच कन्यकाम् ।**
**पयोधरेषु गन्धर्वः रजस्यग्निः प्रतिष्ठितः"** इति ।

तथाच रजःप्रादुर्भावोत्तरकालमात्रभोगाधिकारीयोऽग्निस्तेन दत्तैव कन्या मनुष्यस्य भार्या भवतीति प्रकृतमन्त्रार्थःपर्यवस्यति। तथाच सिद्धमृतूत्तरकालमेव स्त्रियो मनुष्यस्य विवाहयोग्या भवन्तीति ॥

(५) पाणिग्रहणार्थे प्रयुज्यमानेन "ग्रभ्णामित" इति मन्त्रेण सत्प्रजालाभार्थमिदं पाणिग्रहणं, आच जरावस्थायास्त्वां प्रति मे पतिभावोऽस्त्वितिच वधूं प्रति वरो ब्रूते। नहि प्रजननयोग्यामवस्थामनापन्नां बालिकामुद्दिश्य इदं वचनं भागीभवति ॥

(६) सप्तमपदनिष्क्रमणे **"सखा सप्तपदाभवे"** त्यादिना **"एहि सूनृत"** इत्यन्तेन मन्त्रेण ऋक्सामद्युपृथिव्यादिदृष्टान्तपूर्वकमत्यन्तकामिनोर्यूनोर्नर्मसल्लापवत्परस्परसख्यं स्त्रियं प्रति बहुप्रपञ्चमभिधीयते वरेण। नखलु वरस्य यौवनावस्थामात्रेण इदं वचनं संभवति। अस्थानेहि तदा नर्मवचनं मन्त्रोक्तं प्रसारितं स्यात्। आशामोदककल्पश्च सर्वो मन्त्रार्थः प्रसज्येत, यदि विवाह्या वधूरप्रौढावस्थास्यात्।

(७) पतिगृहगमनाय रथमारोहन्तीं वधूंप्रति "उदुत्तरमारोहन्ती" त्यादिना वरेणोच्यमानमात्मश्वशुरप्रजास्नुषाधनादिकं प्रति नियन्तृभावरूपं प्राधान्यं तस्याः प्रौढावस्थामेव व्यवस्थापयति, बालायास्तच्छक्त्यनुपपत्तेः ॥

(८) पतिगृहगताया वध्वाअङ्के कमपि बालकं निवेश्य तस्मै फलानि प्रदाय आह वरः **यथा फलानि प्रसवशीलानि एवमियमपि प्रसवशीला भवतु तथा गृहकर्मनिर्वाहकत्वमग्न्यातिथिपरिचरणजागरूकत्वं मयासह शरीरसंबन्धश्च चिरायानुभूय जरावस्थायां पुत्रादीनामपि कर्तव्यविधेरुपदेष्ट्री भवतु"** इति । न ह्युपदेशग्रहणायाप्यनर्हे शैशवे वयस्ययमर्थो वध्वां वदितुं युज्यते

यद्यपि दिनत्रयमात्रब्रह्मचर्यविधानमेकं तथामूर्धाभिषिक्तंचान्यच्चतुर्थदिने समावेशनविधानन्नामेत्यधिकमपि हेतुद्वयमत्र विषयेऽस्तीति कृत्वा तदुभयमपि श्रौतार्थकोटावेवैकदेशिभिः परिगणितं दृश्यते। तथाऽपि तयोरुभयोरपि केवलस्मार्तत्वाच्छ्रौतमध्ये गणनमनवधानमूलकमिति बोध्यं। स्मार्तमपि तदुभयं परस्ताद्विचारयिष्यामः। तदेवं वैवाहिकाः मन्त्राः कात्स्न्येन परामृश्यमाना उपपादितैरष्टभिर्लिङ्गैर्विवाह्यां वधूं युवतिमेव व्यवस्थापयन्तीति ॥

(१) अत्रब्रूमः ननुचभोः किं विवाहविषये विधिरेवास्तमुपागात्, यावता मन्त्रलिङ्गानुसारेणैवैतमर्थमभ्यूहितुमभिनिविशसे। असत्यामेवहि चोदनायां लिङ्गमन्वेष्टव्यं भवति। चोदनाश्च ऋतुकालात्पुरस्तादेव स्त्रीणां विवाहं विदधानाः परश्शताउपलभ्यंते। तथाहि मनुः

**"त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीं ।**
**त्र्यष्टवर्षोऽष्टवर्षांवा धर्मे सीदति सत्वरः ॥"**

(९—९४) इति । तथा संवर्तः

**"यावन्नलज्जते कन्या यावत्क्रीडति पांसुषु ।**
**यावत्तिष्ठति गोमार्गे तावत्कन्यां विवाहयेत् ॥"**

इति । वसिष्ठश्च

**"प्रयच्छेन्नग्निकां कन्यामृतुकालभयात्पिता ।"**

इति । यमः

**"विवाहंचोपनयनं स्त्रीणामाह पितामहः ।**
**तस्माद्गर्भाष्टमश्श्रेष्ठःजन्मतोवाष्टवत्सरः ॥"** इति । व्याघ्रपादः
**उपायनोदितः कालः स्त्रीणामुद्वाहकर्मणि ।**
**स्त्रीणामुपनयस्थाने विवाहं मनुरब्रवीत् ॥"**

इति । एवमन्याश्च चोदनाः प्रत्यक्षमेव स्त्रीणां विवाहं विदधाना अष्टमादीन् ऋतोरर्वाचीनान् वयोविशेषानेव विवाहकालान्व्यवस्थापयन्ति निर्विचिकित्सं । नहि प्रत्यक्षया चोदनया प्रतिपादितेऽर्थे तत्पृष्ठतोगामिना लिङ्गेन कश्चिदर्थान्तरमनुमातुमायस्येत्. नखलु करिणि विषाणशुण्डादण्डादिमण्डिते पुरतश्चक्षुस्सन्निकृष्टे पृष्ठतोगामिनं पुरुषं लिङ्गमाश्रित्य "अश्वोयमिति" अनुमिमानो भवति श्लाघनीयप्रज्ञः तस्मान्न विधिसिद्धेऽर्थे विरोधिनो लैङ्गिकप्रत्ययस्य उन्मेषावकाशोऽस्तीति ॥

अत्राहुः परे । यद्यप्युदाहृताश्चोदनाः तथाऽपि न प्रत्यक्षो विधिरुपलभ्यते श्रुतिषु 'इयद्वायनीं वधूं विवाहयेदिति' । उदाहृतास्तु चोद-

नास्स्मृतिष्वेवोपलभ्यन्ते। लिङ्गानि पुनश्श्रौतानि। किंचभोस्स्मृतिरप्रमाणमिति मन्यते भवान्, यत्प्रत्यक्षं विधिमुत्सृज्य कल्पनाप्रयासमनुभवसि। नाप्रमाणं स्मृतिः, किंतु श्रुतिवन्न प्रमाणमिति ब्रूमः। स्मार्तोऽपिहि विधि मूलश्रुतिमनुमापयन्नेव प्रमाणं भवति न स्वातन्त्र्येण। श्रौतञ्च लिङ्गं स्वानुगुणं कमपि विधिमनुमापयति। तथाच द्विविधो विधिस्संपद्यते स्मार्तविध्यनुमितश्श्रौतलिङ्गानुमितश्चेति। तत्र यच्छ्रौतलिङ्गानुसारि वयन्तदनुष्ठास्यामः। अथवा श्रौतलिङ्गानुसार्येव विधिर्ज्यायानिति कृत्वा सएवानुष्ठायिष्यते सर्वैरपि। स्मृतिकाराःखल्ववीचीनास्स्वस्वकालानुगुण्येन कल्पिकमप्यर्थमभिहितवन्तस्स्युः नैवं श्रुतिः, तस्या नित्यत्वात् तद्बोधितएवार्थस्सार्वदिकइति निर्णेष्यामः। यद्येवं निर्णेष्यसि का गतिस्स्मार्तानां विधीनां, अपरामर्शनिपुणाश्श्रद्धाजडा जना गतिर्भविष्यन्ति, अप्रमाणंवा ते भवन्तु। तस्मात् स्मृत्युक्तचोदना विहाय श्रौतानि लिङ्गान्येव तावत्परामृशामइति ॥

(२) अत्रोच्यते अपूर्वमिदमायुष्मतः पाण्डित्यं प्रमाणव्यवस्थापनंच। मन्त्रार्थवादानांहि आजानतएव विधिशेषतया समाम्नायमानानां तदेकवाक्यतयैवार्थावबोधकत्वेन विधितः पृथक् क्वचिदप्यर्थे प्रामाण्यमेव न शक्यं कल्पयितुमिति जैमिनीयाः प्रतिजज्ञिरे। ब्रह्ममीमांसायां तु यद्यपि विध्येकवाक्यतापन्नानाममीषां तत्रैव परमतात्पर्येऽपि अवान्तरं किमपि तात्पर्यमभ्युपेत्य प्रतीयमानेष्वप्यर्थेषु प्रामाण्यमुपपादितं देवताधिकरणे। तथाऽपि प्रमाणान्तरप्राप्तिविरोधयोरसतोरेवान्यपराणां मन्त्रादीनां प्रतीयमानार्थेऽवान्तरं तात्पर्यं नतु तद्विरोधे प्राप्तौवेति तत्रैव घण्टाघोषः। एवंच सति प्रत्यक्षादिलौकिकप्रमाणविरुद्धमप्यर्थमर्थवादामन्त्राश्च न प्रमापयितुं शक्नुवन्तीति स्थिते किमङ्ग

वक्तव्यं संप्रातिपन्नशब्दप्रमाणाविधिबाधितमर्थं व्यञ्जयितुमपि न प्रगल्भन्तइति। एतेन श्रुतिवत्स्मृतिर्न प्रमाणमिति श्रौतलिङ्गेन विध्यन्तरमनुमास्यामहइति प्रत्युक्तं। अन्यपराश्रुतयोऽपि प्रत्यक्षाद्यपेक्षयाऽपि दुर्बलाः, ऐदंपर्यप्रवृत्तसंप्रातिपन्नस्मार्तविधिविरोधेतु समुच्छ्वसितुमपि हि न प्रगल्भन्ते ॥

(२) किंच नखलु श्रुतिरित्येव सर्वं वाक्यं सर्वत्रार्थे प्रमाणं भवति, नवा स्मृतिरित्येतावतैव सर्वमप्यप्रमाणं। किंतु प्रमेयावगमसन्निकर्षविप्रकर्षाभ्यामेव प्रमाणस्य बलाबले इति व्यवतिष्ठते सिद्धान्तः। प्रमेयावगमोपयोगीनिच प्रमाणानि सन्निकर्षतारतम्यात् श्रुतिलिङ्गवाक्यादिभेदेन षोढा विभिद्यन्ते। तेषुच श्रौतं स्मार्तं वा सन्निकृष्टं प्रमाणमपेक्ष्य विप्रकृष्टं दुर्बलं भवति, न तत्र जातिबलं किञ्चिदुपयुज्यते। तथाच पारमर्षं सूत्रं "**श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्**" (जै ३-३-१४) इति। अत्रच प्रमाणबलाबलव्यवस्थापके सूत्रे न श्रुतिशब्दो वेदवचनः, किंतु निरपेक्षतया बोधकश्शब्दः प्रमेयावगमेऽत्यन्तसन्निकृष्टउच्यते। सच श्रौतस्मार्तोवा न तद्विशेषइह विवक्ष्यते। लिङ्गादीनितु पञ्चापि प्रमाणानि उत्तरोत्तरं विप्रकृष्यन्ते प्रमेयबोधविषये। तत्र यद्यपि लिङ्गं श्रौतं भवतु, तथाऽपि तद्विप्रकृष्टमेव प्रमाणं। श्रुतिस्तु स्मृतिसिद्धाऽपि लिङ्गापेक्षया प्रमेये सन्निकृष्टैव न किंचिद्विप्रकृष्यते। तथाच प्रमेयविप्रकृष्टमतएव दुर्बलं श्रौतमपि लिङ्गमपेक्ष्य सन्निकृष्टा स्मृतिसिद्धाऽपि श्रुतिरेव प्रबलं प्रमाणं। अतएवानन्यथासिद्धेन "अहं गर्भमदधा" मित्यादिमन्त्रलिङ्गेन भर्तृजप्यत्वेन निश्चयावगतमपि "आरोहोरुमि" त्यादिमन्त्रभागं स्मार्ती श्रुतिरन्यजप्यं व्यवस्थाप

यति "अन्यां वैनामभिमन्त्रयेत" (आप. गृ. ३-९-११) इति। तदेतद्व्याचक्षाणाश्च प्राञ्चः "इदंच "अहं गर्भमदधा मित्या" दिलिङ्ग विरोधेऽपि श्रुतेर्बलीयस्त्वादि"ति स्मार्तश्रुतेश्श्रौतलिङ्गापेक्षया प्राबल्यं वस्तुसदुपपादयांबभूवुः। एकमेवच मन्त्रं विभिन्नेष्वर्थेषु बहुळं विनि-युञ्जानेषु स्मृतिवचनेष्वपि एषएव कृतान्तआस्थेयः। एकमेव पुरुषसूक्तं शिवविष्णुकुबेरवरुणाद्यनेकदेवताराधनेषु विनियुञ्जानानि स्मृतिवचना-न्युपलभ्यन्ते। तथा आग्नेये कर्मणि विनियुक्तानां "उद्बुद्ध्यस्वाग्ने" "अग्निर्मूर्धादिवः" इत्यादीनां मन्त्राणां बुधभौमादिग्रहाराधनेपि विनियोगस्स्मर्यते। नहि सर्वेविनियोगा मन्त्रलिङ्गमनुसरन्तीति शक्यं वक्तुं। प्रसिद्धमेतद्वैदिकगोष्ठ्यां। नहीदमनवगतवैदिकसंप्रदायः प्राकृतो विजानाति। एतेन श्रुत्यपेक्षया स्मृतेर्दुर्बलत्वादिति विरोधाधिकरणवर्ण नं निराकृतं भवति। श्रुतिलिङ्गादिष्वेकजातीयप्रमाणभूतयोर्हि श्रुति स्मृत्योस्सति विरोधप्रसङ्गे श्रुत्यपेक्षया स्मृतिर्हीनबला भवति। यथा एकामेवौदुम्बरीं प्रति स्पर्शनं सर्ववेष्टनञ्चान्योन्यविरुद्धमर्थद्वयं श्रुत्यैव प्रमाणेन बोधयन्त्योश्श्रुतिस्मृत्योस्स्मृतिर्दुर्बलेति। यत्रतु विभिन्नजाती यप्रमाणेन विभिन्नार्थबोधकता तत्र श्रुतिस्मृतिर्वा यतरा प्रमेयसन्निकर्ष वती ततरैव बलीयसी, तदुक्तं भट्टवार्तिके—

नैव तावच्छ्रुतिस्मृत्योस्स्वरूपेण विरुद्धता।
बलाबलपरीक्षावा प्रमेयद्वारिका हि सा॥
तद्यस्यामेव वेळायां विरोधो दृश्यते तयोः।
प्रमेययोस्स्वरूपस्थं तस्यामेव बलाबलम्॥ (१-३-७) इति।
तथा "भिन्नकक्षागते येच प्रमाणे तत्र धावतः।
तयोश्शीघ्रेण निर्णीते मन्थरं न प्रवर्तते॥

**ताद्धि दूरमपि प्राप्तमेकमप्यगतं पदं ।**
**इतरेण गतेनादावेकान्तेनैव जीयते"** ॥ (जै सू १-३-३)

इतिच । तत्रैवं सति प्रमाणबलाबलनिर्णये यत्केचिद्वर्णयन्ति स्मृति चोदना विहाय मन्त्रलिङ्गमेव प्रबलमिहाश्रयामइति तत् प्रमाणस्व रूपताद्विशेषादिविमर्शविधुराणां यथाजातानामेव शोभते न पण्डिताना मिति सिद्धम् ॥

(४) अपिच विधिना कर्मविशेषेप्रथमंविनियुक्ताः खलु मन्त्रा- स्तत्समवेतं कञ्चिदर्थं प्रकाशयितुमर्हन्ति, नासति विनियोगे। तत्र यद्य- पि मन्त्रोऽर्थान्तरमेव स्वशक्त्या प्रकाशयितुमर्हति, तथाऽपि यादृशेऽ- र्थविशेषे चोदनयाऽयं विनियोजितस्तमर्थमतिवार्तितुं न प्रगल्भेत। लक्ष- णादिभिरपि विधिबोधितमेवार्थमनुसरति न पुनस्स्वशक्तिमुदीक्षते। नहि राजचोदितो राजपुरुषश्चोदितविपरीते शक्तोऽपि प्रवर्तितुमर्हति। तथा चोदनाविपरीतेऽर्थे मन्त्रोऽपि न प्रवर्तते तद्यथा **"कदाचन स्तरी- रसि नेन्द्र"** त्यादिः कश्चिन्मन्त्रस्स्वशक्त्या यद्यपि मघवानमेव प्रत्या- ययति नार्थान्तरं। तथाऽपि **"ऐन्द्र्या गार्हपत्यमुपतिष्ठत"** इति चोदना गार्हपत्याग्न्युपस्थाने मन्त्रमिमं विनियोजयतीति अनुदीक्ष्यापि स्वशक्तिं गार्हपत्यमेवाग्निमुपस्थापयति। न ह्यत्र मन्त्रलिङ्गमात्रपरामर्शेन मन्त्रोऽयमैन्द्रएव कर्मण्यङ्गभूतइति व्यवस्थापनं घटते। नापि विधिबला दग्निपरत्वं लिङ्गबलाचेन्द्रपरत्वमित्युभयमप्यास्तामिति समीकरणं विदु- षामर्हम्। नवा पुराकाले मन्त्रोऽयमैन्द्रएव कर्मण्युपयुक्तआसीत्, पाश्चा- त्यैस्तु कैश्चिद्विनियोगबलमवलम्ब्यार्थान्तरे गार्हपत्ये केनापि हेतुनोपयु- ज्यतइति प्राचीनार्वाचीनभेदकल्पनं साधु भवति। सर्वमेतदविदित

श्रौतसंप्रदायानां संभिन्नबुद्धीनां व्यामोहमात्रं । तस्मान्नचोदनाविरुद्धे ऽर्थे विद्यमानमपि मन्त्रलिङ्गं क्रमते ॥

(५) अन्यच्च। इदं कर्मानेनमन्त्रेण कार्यमिति कर्मविशेषं प्रत्यङ्गत्वे गृहीते ततस्तत्र कर्मणि तेन मन्त्रेण कश्चिदर्थोऽनुमीयेत परामर्शोत्तरमिवानुमानेन । अगृहीताङ्गभावेनतु मन्त्रेण न कश्चिदर्थो निर्धारयितुं पार्यते । तथाचाङ्गभावग्राहकं किञ्चन प्रमाणं प्रथममुपजीव्यैव मंत्रः कञ्चिदर्थविशेषं गमयितुमीष्टे । भवदभिमतानांच मन्त्राणां वैवाहिक एव कर्मण्यङ्गत्वं नान्यत्रेति प्रथममिदंके न प्रमाणेन निरचैषीदायुष्मान् नहि श्रौतएव विनियोगविधिश्शक्यः कश्चित्प्रदर्शयितुं। लिङ्गेनैवाङ्गत्वस्याप्युन्नयनेतु दुर्वारं परस्पराश्रयत्वं। ततश्च स्मार्तएव विधिः प्रथममङ्गत्वग्रहणाय प्रमाणत्वेन शरणीकरणीयः । शरणीकृतेच तस्मिन्प्राथमिकेन तेन प्रमाणेन यदि मन्त्रलिङ्गं विरुध्यते तदा न लिङ्गेन तस्य प्रमाणस्य बाधश्शक्यो वदितुं। नहि तदेवोपजीव्यात्मानं लभमानं लिङ्गं तस्यैव बाधकमिति युक्तं कल्पयितुं। तद्बाधेह्यङ्गभावएवमन्त्रस्य बाध्येत। असतिचाङ्गभावे कुत्र कमर्थं साधयिष्यति मन्त्रलिङ्गं। वयोविशेषनिर्णयांशो बाध्यते अङ्गत्वबोधकांशः परमाश्रीयतइति त्वर्धजरतीयमन्याय्यं। तस्मान्नोपजीव्यप्रमाणविरुद्धमर्थं मन्त्रलिङ्गं गमयितुमीष्टे ॥

(६) किञ्चान्यत्। मन्त्रोक्तार्थानां विवाहकालावच्छेदेन वधूसंबन्धित्वग्रहणमन्तरेण न तदुपयोगिवधूवयोविशेषरूपार्थानुमापकत्वं लिङ्गस्य संभवति । नहि परामर्शमन्तरेण लिङ्गज्ञानं क्वचिदनुमापकं दृष्टं । तत्संबन्धित्वग्रहश्च स्मृत्यधीनइति त्वदुदाहृतलिङ्गानां लिङ्गत्वमपि स्मार्तमिति समानमेव विधिलिङ्गयोस्स्मार्तत्वं । समानेच विधिलिङ्गयोस्स्मार्तत्वे विधिस्स्वविरुद्धं लिङ्गमाभासीकरोति ॥

(७) अपिच विध्युत्तरकालमेव मन्त्रस्य प्रवृत्त्या विधिरुपक्रमस्थः, मन्त्रश्च पाश्चात्यइति स्फुटं । उपक्रमस्थेन च प्रमाणेन दुर्बलेनापि योऽर्थो बोधितस्तमेवार्थं प्रबलमपि पाश्चात्यं प्रमाणमनुसरति कथंचिदन्यथानयनेनापि, नतु ततो विपरीतं । नापि पाश्चात्यानुसारेण प्राचीनं दुर्बलमप्यन्यथा नीयते । तथाहि वारुणेष्टिः **"यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्,,** (तै. सं. २—३—१२) इति विधिवाक्येन प्रबलेन यद्यप्यश्वप्रतिग्रहीतुरेव कर्तव्यत्वेन स्पष्टमवगम्यते । तथाऽपि **"प्रजापतिर्वरुणायाश्वमनयदि"** त्यादिरुपक्रमस्थस्तदर्थवादस्त्वयं विध्यपेक्षया दुर्बलोऽप्यश्वदातुरेवेमामिष्टिमवगमयति । ततश्च प्रबलदुर्बलयोर्विध्यर्थवादयोर्विरोधप्रसङ्गे दुर्बलमप्यर्थवादमुपक्रमस्थत्वाद्बलीयांसमाश्रित्य तदनुसारेण पाश्चात्यं विधिवाक्यमेव प्रबलमपि लक्षणाऽऽदिना दातृपरतया परिणीयते । प्रसिद्धश्चायमर्थः पूर्वतन्त्रे तृतीयाध्याये **"अचोदितंच कर्मभेदात्"** (३—४ — ३०) इत्यधिकरणे। एवं दुर्बलेनापि स्मार्तविधिना पौरस्त्येन बोधितं विवाह्यवधूनां वयोविशेषमनुसृत्यैव पाश्चात्यानि मन्त्रलिङ्गानि कथंचिदपि नेतव्यानि । इहहि विवाहालम्बनभूतयोर्वधूवरयोर्यथाशास्त्रं वयोलक्षणादिनिर्णायको विधिस्सर्वतःपुरस्तात् प्रवर्तते । ततःपरमेव विवाहविधिः तदनन्तरञ्च तदङ्गभूतमन्त्रप्रवृत्तिरितिक्रमः तथाच परमोपक्रमस्थं वयोनिर्णयविधिं जघन्यानि लिङ्गानि न बाधितुमुत्सहन्ते । विधिरपिहि उपक्रमसिद्धमर्थमतिवर्तितुं न क्षमते, किमु वक्तव्यं पुरुषबुद्धिकल्पनाधीनं लिङ्गमौपक्रमिकमर्थं नातिक्रामतीति ॥

(८ A.) किञ्च कालान्तरभाविनमर्थमादायापि कथंचिन्मन्त्रलिङ्गानि सावकाशानि भवितुमर्हन्ति । विधीनां पुनर्लिङ्गबलावष्ट

म्भेन स्वार्थे बाध्यमानानां न कश्चिदन्योऽवकाशश्शक्यः कल्पयितुमिति वैयर्थ्यमेव प्रसज्येत । ततश्च "आनर्थक्यप्रतिहतानां विपरीतं बलाबलमि" ति न्यायेन स्मार्तैरपि विधिभिरेव श्रौतान्यपि लिङ्गानि अर्थान्तरविषयतामापाद्यन्ते, नपुनरन्यथाचरितार्थैर्लिङ्गैरतादृशानि विधिशास्त्राणि बाधितुं शक्यन्ते । यदुक्तं स्मार्तविधीनामृषिप्रणीतानां तदातदातनदेशकालाद्यानुगुण्येन कल्पितत्वशंकाप्रसरेण हेतुदर्शनन्यायादप्रामाण्यसंभावनया नोपादेयत्वमिति, तत् साहसमात्रं । नहि महर्षयो देशं कालमन्यद्वा किंचिदनुसरन्तः तादर्थ्येन धर्माधर्मविषयेऽपि शास्त्राण्यन्यथाकुर्वन्तीति युक्तमस्मदादिष्विव कल्पयितुं । न हि लोकरीत्यनुसारेण धर्ममन्यथाकुर्वन्तः प्रमाणभूता भवितुमर्हन्ति व्यवस्थितत्वाद्धर्माधर्मयोः । अस्मादृशाः खल्वधीरबुद्धयः कलुषहृदया दृष्टानुसारेण शास्त्रमप्यन्यथानेतुमभिनिविशामहे । नखल्विदानीन्तनानामस्माकमिव प्राचामपि महर्षीणां स्वभावआसीदिति शक्यं संभावयितुं युक्तंवा । ते हि विदितवेदितव्याः प्रत्यक्षधर्म्माणः परावरज्ञा असिधाराव्रतन्यायेन धर्म्मपथं परिपालयन्तस्तमेव मार्गमस्मानप्युद्दिश्योपादिष्टवन्तः न तत्र देशकालाद्यनुसरणहेतुगन्धोऽप्यस्ति एतेन स्मृतिष्वपि अवान्तरार्वाचीनप्राचीनकालाद्यनुसार्यर्थनिरूपणकल्पनं परास्तं

(८ B.) अपिच भवेदेतदेवं लौकिकेष्वर्थेषु । प्रथमं यथाकथंचित्कस्यचित्कार्यस्यानुष्ठानं ततस्तत्र गुणदोषावनुभूय तदनुसारेण पश्चादन्यथाकरणं ततश्च कश्चित्प्रकारभेदइति तत्तत्प्राण्यभिमतानुगुणत्वाल्लौकिकप्रवृत्तेः । कश्चित्क्वचिदेकधा प्रवर्तते कश्चित्तु तत्रैवान्यथा वर्तते कश्चित्तु नैव प्रवर्तते। न ह्येतावता तेषु किञ्चित्पुण्या-

पुण्यात्मकमदृष्टतारतम्यं शक्यं वदितुं । वैदिकाः पुनरर्था नित्याएव भवन्ति, नत्वेषां पौरुषेयानुभवमूलकगुणदोषसंभावनया कालभेदेन च जातुचिदन्यथाकरणं संभवति। अज्ञातोहि धर्म्मो नानुष्ठातुं शक्यतइति अनुष्ठानात्प्रागेव तज्ज्ञानमावश्यकं, यद्यनुतिष्ठासति । तथापूर्वपूर्वोऽप्य-नुष्ठाता प्रथममनुष्ठेयार्थरूपं धर्मं प्रमायैव पश्चादन्वतिष्ठदिति धर्माधर्म ज्ञानसामग्री काचिन्नित्यसिद्धैवाभ्युपगन्तव्या, नत्विदानीन्तनी सा । नापि पूर्वसिद्धप्रमाणबोधितो धर्मस्स्वाभिमतानुसारेण केनाप्यन्यथा क्रियते । यदि कश्चिदन्यथाकरोति नायं धर्मो भवितुमर्हति । अतएव न महर्षयोऽपि वेदबोधितं धर्मस्वरूपं कालानुगुण्येन विभिन्दन्ति, भै-षज्यानीव स्वानुभूतानि प्रामाणिकाः । अपितु यथादृष्टमेव वैदिकमर्थं जातं स्वग्रन्थेषु स्मृत्याख्येषु स्फुटं बोधयन्ति । न तत्र कश्चिदाधुनि-कोऽर्थइत्युत्प्रेक्षा घटते । अनुभवोऽपि तेषां वेदमूलकएव नास्मादृश-स्येव लोकमूलकः "श्रुतिं पश्यन्ति मुनयस्स्मरन्ति च तथा स्मृति मि" ति मनुस्मृतेः । अतएवार्वाची नकालभवाअपि स्मृतयः पूर्वसिद्ध मेव वैदिकं धर्मजातमवबोधयन्तीति वेदार्थोनित्यएव नार्वाचीनकालिक इति शक्यते वक्तुं । तदाह भगवान्वृत्तिभाष्यकारः "यद्यप्यर्थो नित्यः यात्वसौ वर्णानुपूर्वी सा अनित्ये" ति । युक्तञ्चैतत् नह्यस्मदादि-भिः कृतेषु ग्रन्थेषु ज्योतिष्टोमोऽनुष्ठेयः अग्निहोत्रंवा कर्तव्यमित्यादि लेखनमात्रेण ज्योतिष्टोमादिधर्मोऽपीदानीन्तनइति भवति । एवमेवार्षे ष्वपि ग्रन्थेषु बोध्यं । ऋषयोह्याधुनिकमर्थं लेशतोऽप्यनिरूपयन्तः पूर्वसिद्धमेव वेदार्थमस्मार्षुः (८—३) ।

(८ C.) अपिच किं लोकानुभवोत्तरकालं शब्दप्रवृत्तिः, किं वा शब्दार्थतत्वमुपलभ्य लोकप्रवृत्तिरिति किञ्चिद्विमृशतु भवान् ।

लोकतोऽर्थमनुभूय तदनन्तरमेव तदर्थबोधकशब्दरचनेतिचेत्, बाढमेवं स्यात् लौकिकेष्वर्थेषु। अलौकिकेषु पुनर्धर्माधर्मेषु नैवं शक्यते। धर्मादिष्वपि चैवंस्यादिति दृष्टानुसारात्कल्पयामीतिचेत् यद्यप्येवं कल्पयति भवान्। श्रुतिरपिह्येवं सत्यनित्या प्रसज्येत। अस्तु साऽप्यनित्या, को दोषइतिचेत् नूनमत्र न भवतोदोषः कश्चित्प्रतिभाति। ऋषयः पुनरतीन्द्रियार्थकुशलाअपि व्यासादयो बिभ्यति ईदृशमर्थमभिधातुं। ते हि आब्रह्मणः आच अधुनातनात् पुरुषात् सर्वेषामपि नित्यसिद्धाच्छब्दादेव अलौकिकधर्माद्यर्थानुभवः न लोकानुभवोत्तरकालं तथाविधशब्दप्रवृत्तिरित्युपदिशन्ति। अपिच अनुभवोपिहि जायमानः पूर्वसिद्धां सामग्रीमनपेक्ष्य न धर्मादिषु कस्यचिदवकल्पते। साचेत्सामग्री लोकानुभवाधीनात्मलाभा हन्त दुर्वारं परस्पराश्रयत्वं। किंच स्रष्टव्यविचित्रतरजगद्बिम्बज्ञानमपि स्रष्टुस्सतो ब्रह्मणस्सृष्टिपूर्वसिद्धात् वैदिकादेव शब्दादुत्पद्यतइति कथमेषोऽनित्यइति कल्पनाघटतां। तथाच भगवान् बादरायणः "**शब्दइतिचेन्नातःप्रभवादि**" ति "**अतएवच नित्यत्वमि**" तिच (व्या. सू. १—३) आचार्येण शबरस्वामिनाऽप्ययमर्थो विस्तरेण निरूपितः। लौकिकेष्वप्यर्थेषु चिकीर्षितप्रकारमविज्ञाय न प्रवृत्तिरुपपद्यतइति पूर्वसिद्धैवावश्यंज्ञानसामग्री कल्पयितव्या। किमंग वक्तव्यमलौकिकेष्वर्थेषु। तस्मादसदेतत् यद्वेदानुसारिणीषु मन्वादिस्मृतिषु अर्वाचीनकालानुसार्यर्थनिरूपणमिति दुर्मेधसामुत्प्रेक्षा।

(८ D.) यदपि पूर्वतन्त्रे विरोधाधिकरणे हेतुदर्शनात्स्मृतीनामप्रामाण्यमुद्भावितं न तद्वैदिकमार्गानुसारिणीनां मन्वादिस्मृतीनां, अपितु शाक्यादिवेदबाह्यस्मृतीरुद्दिश्यैवेति, तत्वं विजानातु भवान्। तदुक्तं तन्त्रवार्तिके " यान्येतानि त्रयीविद्भिर्नपरिगृहीतानि किञ्चित

न्मिश्रधर्मकञ्चुकच्छायापातितानि लोकोपसंग्रहलाभपूजाख्यातिप्रयोजनपराणि त्रयीविपरीतासंबन्धदृष्टशोभादिप्रत्यक्षानुमानोपमानार्थापत्तिप्राययुक्तिमूलोपनिबद्धानि सांख्ययोगपाञ्चरात्रपाशुपतशाक्यनिर्ग्रन्थपरिगृहीतधर्माधर्मनिबन्धनानि विषचिकित्सावशीकरणोच्चाटनोन्मादनादिसमर्थकतिपयमन्त्रौषधिकादाचित्कसिद्धिनिदर्शनबलेन अहिंसासत्यवचनदमदानदयादिश्रुतिस्मृतिसंवादिस्तोकार्थगन्धवासितजीविकाप्रायार्थान्तरोपदेशीनि यानिच बाह्यतराणि म्लेच्छाचारमिश्रकभोजनाचरणनिबन्धनानि तेषामेवैतच्छ्रुतिविरोधहेतुदर्शनाभ्यामनपेक्षणीयत्वं प्रतिपाद्यते" इति ॥

(८ E.) अपिच हेतुमूलकत्वकल्पने स्मृतित्वमेव आसामपेयात्। महर्षयोहि ज्ञानातिशयशालिनो यथाभूतं वेदार्थमनुभूय तमेवार्थं शब्दान्तरेणास्मदाद्युद्देशेन स्मरन्तीतिहि प्रसिद्धं शास्त्रेषु। तथाच मानवे स्मर्यते—

**"श्रुतिं पश्यन्ति मुनयः स्मरन्तिच तथा स्मृतिम्।**
**तस्मात्प्रमाणमुभयं प्रमाणैः प्रमितं भुवि"** ॥ इति।

तथाविधे स्मृतिवाक्यार्थे यदिहेतुमूलकत्वं कल्प्यते तदाऽपूर्वएवायमर्थो भवितुमर्हतीति तस्य वेदार्थानुभवमूलकस्मृतिरूपतैवहि बाध्येत। नहि श्रुत्यर्थवक्तॄणामृषीणां वाचः पौरुषेयत्वेन तदभिहितोऽर्थोऽप्यवेदार्थस्स्यात्। योहि वक्तृवाचः पौरुषेयत्वेन तदुक्तोऽप्यर्थोऽश्रुत्यर्थइति मन्येत, स वेदमप्यवेदं मन्येत वेदवक्तुरिदानीन्तनस्य वाचोऽपि पौरुषेयत्वेन तत्प्रकाशितवेदस्यापि अवेदत्वावश्यंभावापातात्। तदप्युक्तं वार्तिके —

"वेदोऽपीदृशएवायं पुरुषैर्यः प्रकाश्यते ।
स पठद्भिः प्रकाश्येत स्मरद्भिर्वेति तुल्यभाक् ॥
अनुच्चारणकालेच संस्कारैरेव केवलैः ।
तत्कृतस्मरणैर्वाऽयं वेदाध्येतृषु तिष्ठति ॥
तेनार्थं कथयद्भिर्या स्मृतार्था कथ्यते श्रुतिः ।
पठिताभिस्समानाऽसौ केन न्यायेन बाध्यते" ॥ इति ।

अपिच वेदमूलकस्य स्मरणस्य यत्किञ्चिद्दृष्टहेतुमूलकतां वदतो मूलभूतवेदार्थएवायं हैतुकत्ववादः पर्यवस्येत् । मनुरपि स्मृतेर्हेतु मूलकत्वकल्पनेनावज्ञां कुर्वाणो वेदनिन्दकएव भवतीत्याह —

"योऽवमन्येत तेतूभे हेतुशास्त्राश्रयान्नरः ।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः" ॥ इति ।

ते इति श्रुतिस्मृतीइत्यर्थः । एतेन "अपरामर्शनिपुणाश्श्रद्धाजडाः केचनपरं स्मृतीनामनुष्ठातारस्स्युरि"ति प्रत्युक्तं । परामृशन्त एवहि सूक्ष्मदर्शिनः पण्डितमणयो वैदिकस्मृतिबोधितमप्यर्थं वेदबोधितादविशिष्टं निश्चिन्वन्तस्तुल्यवदेवानुतिष्ठन्ति, नापरामर्शी स्थूलदृष्टी रागाभिनिविष्टबुद्धिः प्राकृतोऽमुमर्थं स [illegible]दधिगन्तुमपि शक्नोति ॥

[illegible]पिच वैदिके पथि वर्तमानानां त्रैवर्णिकानां संप्रतिपन्नप्रमाण भा[illegible]ष्वपि स्मृतिविधिषु हेतुमूलकत्वशङ्काकरणमेव तावन्न युज्यते । एवंसति सर्वत्रापि विधिषु कस्यचिद्धेतोरुत्प्रेक्षासंभवेन शास्त्रमात्राप्रामाण्यप्रसंगात् । [illegible]हि विनिगमना, अयमेव विधिर्हैतुको नायमित्यत्र, सर्वत्राप्यौत्प्रेक्षिकहेतोस्सुलभत्वात् । तथाच लोकायतिकवादएव पर्यवसानमापद्येत । ते खल्वेवमाहुः—

"अग्निहोत्रं त्रयोवेदास्त्रिदण्डं भस्मकुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविका धातृनिर्मिता ॥
ततश्च जीवनोपायः ब्राह्मणैर्विहितस्त्विह ।
मृतानां प्रेतकार्याणि न त्वन्यद्विद्यते क्वचिदि"त्यादि ॥

तस्मात् स्मृत्यर्थेषु हेतुमूलकत्वकल्पनं कल्पयितुरेव बुद्धिदोषः । सच प्रादुर्भवन् लोकायतिकमतगर्तमेव नियतमवपातयेत् । विस्तरेण चैतद्विरोधाधिकरणे तन्त्रवार्तिके शङ्काग्रन्थे निरूपितं । तथाहि ।

"तस्माद्यथाविरोधेऽपि पठ्यमानप्रमाणता ।
पठितस्मर्यमाणानां तथैवेत्यवधार्यताम् ॥
गृह्यमाणनिमित्तत्वाद्यद्युच्येताप्रमाणता ।
उत्प्रेक्षणीयहेतुत्वात्सा सर्वत्र प्रसज्यते ॥
रागद्वेषमदोन्मादप्रमादालस्यलुब्धताः ।
क्वा नोत्प्रेक्षितुं शक्यास्स्मृत्यप्रामाण्यहेतवः ॥
अदुष्टेन हि चित्तेन सुलभा साधुमूलता ।
दुष्टमूलत्वलाभस्तु भवत्याशयदोषतः ॥
कावा धर्मक्रिया यस्यां दृष्टो हेतुर्नयुज्यते ।
कथंचिद्वा विरुद्धत्वं प्रत्यक्षश्रुतिभिस्सह ॥
लोकायतिकमूर्खाणां नैवान्यत्कर्म विद्यते ।
यावत्किञ्चिददृष्टार्थं तद्दृष्टार्थंहि कुर्वते ॥
वैदिकान्यपि कर्माणि दृष्टार्थान्येव ते विदुः ।
अल्पेनापि निमित्तेन विरोधं योजयन्तिच ॥
तेभ्यश्चेत् प्रसरोनाम दत्तो मीमांसकैः क्वचित् ।
नच कंचन मुंचेयुः धर्ममार्गंहि ते तदा ॥

प्रसरं नलभन्तेहि यावत्क्वचन मर्कटाः ।
नाभिद्रवन्ति ते तावत्पिशाचावा स्वगोचरे ॥
क्वचिद्दत्तेऽवकाशेहि स्वोत्प्रेक्षालब्धधामभिः ।
जीवितुं लभते कस्तैस्तन्मार्गपतितस्स्वयम् ॥
तस्माल्लोकायतस्थानां धर्मनाशनशालिनाम् ।
एवं मीमांसकैः कार्यं न मनोरथपूरणम्" ॥ इति ।

तस्मान्नस्मृत्यर्थेषु दृष्टहेतुमूलकत्वकल्पनं वेदप्रामाण्यवादिनो युक्तम् ॥ ८ ॥

(९) अपिच कतिपयभ्रान्तजनमात्रदृष्टानि लिङ्गानि । लिङ्ग विरोधिन्यश्चोदनाःपुनः निर्दुष्टप्रामाणिकमूर्धन्यानेकमहर्षिजनप्रत्यक्षाः । तथाहि अङ्गिरोवसिष्ठशातातपाश्वलायनयमसंवर्तबोधायनबृहस्पतिया-ज्ञवल्क्यनारदपराशरप्रभृतयो महर्षयः प्रत्यक्षमेव वैदिकान् ऋतुमती विवाहनिषेधविधीननुभूय तानेवार्थतः पठन्ति । अङ्गिराः —

"पितुर्वेश्मनि या कन्या रजस्तु समुपस्पृशेत् ।
भ्रूणहत्या पितुस्तस्यास्सा कन्या वृषळी स्मृता ॥
माताचैव पिताचैव ज्येष्ठोभ्राता तथैवच ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥
उद्वहेद्यस्तु तां कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्योह्यपाङ्क्तेयस्सविप्रो वृषळीपतिः" । (१२६—८)

इति । वसिष्ठः—

"पितुः प्रमादात्तु यदीह कन्या वयःप्रमाणं समतीत्य दीयते ।
सा हन्ति दातारमपीक्षमाणा कालातिरिक्ता गुरुदक्षिणेव ॥

प्रयच्छेन्नग्निकां कन्यामृतुकालभयात्पिता ।
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति ॥
यावच्च कन्यामृतवस्स्पृशन्ति तुल्यैस्सकामामभियाच्यमानाम् ।
भ्रूणानि तावन्ति हतानि ताभ्यांमातापितृभ्यामिति धर्मवादः"

(अध्या १७—६१) इति । लघुशातातपः —

"पितुर्वेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्यास्सा कन्या वृषळी स्मृता" (६९)इति ।

आश्वलायनः —

"रजस्वलाच या कन्या यदिस्यादविवाहिता ।
वृषळी वार्षळेयस्स्याज्जातस्तस्यां सचैवहि" ॥ (प्रक २१ ९)

इति । यमः—

"यः करोत्येकरात्रेण वृषळीसेवनं द्विजः ।
तद्भैक्षेण जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥
वृषळीं यस्तु गृह्णाति ब्राह्मणो मदमोहितः ।
सदासूतकिता तस्य ब्रह्महत्या दिनेदिने ॥
वृषळीगमनं चैव मासमेकं करोति यः ।
इह जन्मनि शूद्रत्वं पुनश्श्वानो भविष्यति ॥
वृषळीफेनपीतस्य निश्वासोपगतस्यच ।
तस्यांचैव प्रसूतस्य निष्कृतिर्नविधीयते ॥
पितुर्गेहेतु या कन्या पश्यत्यसंस्कृता रजः ।
भ्रूणहत्या पितुस्तस्याः कन्यासा वृषळी स्मृता ।
यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ॥

असंभाष्योह्यपाङ्क्तेयस्सविप्रो वृषळीपतिः ।
प्राप्तेच दशमे वर्षे कन्यां यो न प्रयच्छति ॥
मासिमासि रजस्तस्याः पिता पिबति शोणितम् ।
अष्टवर्षा भवेद्गौरी नववर्षाच रोहिणी ॥
दशवर्षा भवेत्कन्या अतऊर्ध्वं रजस्वला ।
माताचैव पिताचैव ज्येष्ठभ्राता तथैवच ॥
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम्" ॥

(अध्या ३—१२—२१) इति । संवर्तः—

"अष्टवर्षा भवेद्गौरी नववर्षाच रोहिणी ।
दशवर्षा भवेत्कन्या अतऊर्ध्वं रजस्वला ॥
माताचैव पिताचैव ज्येष्ठो भ्राता तथैवच ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥
तस्माद्विवाहयेत्कन्यां यावन्नर्तुमती भवेत् ।
विवाहो ह्यष्टवर्षायाः कन्यायास्तु प्रशस्यते" ॥ (६५) इति ।

बोधायनः —

"दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।
अपिवा गुणहीनाय नोपरुन्ध्याद्रजस्वलां" ॥

(प्रश्न ४ अ १—१२) इति । बृहस्पतिः—

"पितुर्गेहेतु या कन्या रजःपश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्यास्सा नारी वृषळी स्मृता ॥
यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्यो ह्यपाङ्क्तेयस्सविप्रो वृषळीपतिः" ॥ इत्यादि ।

याज्ञवल्क्यः—

"अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ" इति । नारदः—
यावन्तश्चर्तवस्तस्यास्समतीयुः पतिं विना ।
तावत्यो भ्रूणहत्यास्स्युस्तस्य यो न ददाति ताम्" ॥ इति ।

प्रत्यक्षाच्च श्रुतिरिह उदाहरिष्यते सिद्धान्तकथनावसरे । एवं प्रत्यक्षदृष्टेषु प्रामाणिकमहर्षिजनोक्तेषु वेदार्थेषु जाग्रत्सु क्व नामायं तद्विरुद्धो भवदुत्प्रेक्षितार्थोऽवकाशं लभेत । नह्यनृषिरस्मादृशः कश्चित् यथावच्छ्रुत्यर्थमधिगन्तुं शक्नोति । तथाच अस्मादृशामर्थकथनाय प्रवृत्तौ श्रुतिरपि बिभेतीति स्मर्यते "बिभेत्यल्पश्रुताद्वेदो मामयं विप्लविष्यति" इति । तथाऋषिवचनानुसारिवेदार्थवचनमेव निश्शंकतया प्रमाणमित्यपि स्मरन्ति —

"वेदार्थो यस्स्वयं ज्ञातस्तत्राज्ञानं भवेदपि ।
ऋषिभिर्निश्चिते तस्मिन् का शङ्का स्यात्महात्मभिः" ॥ इति ।

तस्मात् नरशिरःकपालशुचित्वानुमानवत् आगमबाधितमेवेदं ऋतुमतीविवाहविषयं भवदीयं लैङ्गिकं ज्ञानम् ॥

(१०) अपिच भवदुदाहृतान्वैवाहिकमन्त्रानृषयः किं जानते न जानते, यदि जानन्ति तदा कथमेते मन्त्रलिङ्गान्यमूदृशान्यर्थविशेषप्रसाधकानि मनागपि न गणयांबभूवुः । नखलु भवादृशेभ्यो हीनप्रज्ञास्ते । यदिवा विभिन्नप्रज्ञाः केचित्तथाऽपि कथं बहुष्वेकोऽपि ईदृशं लैङ्गिकमर्थविशेषं नोदाजहार । सर्वेऽपि प्राञ्चस्तद्विनियोगादिप्रदर्शनपराअपि न तदर्थविशेषमज्ञासिषुः, अहमेकस्तु यथावज्जानामीति दुस्स्वप्नएवायं कश्चिद्भवतो दोषमूलकइति स्यान्नान्यथा । भवदीयप्रतिभामात्रविकासी खल्वयमर्थो न प्रमाणान्तरगोचरः । मन्त्रतदर्थावेव प्राञ्चो न जानन्तीतितु अस्माकं तद्वचनशकलमाभासतोविलोक्यैव

मन्त्रादिकं जानतां वचनं "मन्माता वन्ध्ये"तिवचनवदेव स्यात्। तस्मादुक्तेन प्रकारेण परामृश्यमानेषु न्यायेषु यानि विवाहाङ्गभूत मन्त्रार्थपरामर्शेनापाततोभासमानानि पञ्चषाणि लिङ्गानि तानि अत्यन्तदुर्बलत्वात्प्रमाणान्तरबाधितत्वाच्च न भवदभिमतमर्थं प्रसाधयितुं प्रगल्भंते। तथाच तद्बलावष्टम्भेन विवाह्यावध्वो युवतयएव भवेयुरिति अयमध्यवसायस्सर्वथाऽपि न समर्थयितुं शक्यतइति सिद्धम्॥

(११) अत्र वितण्डापण्डितस्तार्किकदर्दूरूटः निपुणतरः कश्चिदीदृशापूर्वमन्त्रालिङ्गद्रष्टॄननुमानकुशलान्बुद्धिमतः प्रत्याह। सत्यमेवमभ्यूहते भवान् "आर्यबालिकानां हितसाधनप्रत्याशाबलेन ऋतुमतीनामेव स्त्रीणां विवाहकरणमुचितमि"ति। अहंतु पश्यामि नायमभ्यूहस्स्त्रीणां सम्यक्सुखाय पर्याप्तो भवति। किन्तु ऋतुमतीभूय पश्चाद्यथाभिमतपुरुषसंसर्गेण संजातपुत्राणां ततःपश्चादेव स्त्रीणां पुत्रेणसह विवाहः कार्यइति व्यवस्थापनं सम्यक्सुखाय स्यात्। तदेवच शास्त्रतोऽनुमाय साधयितव्यं, यदि परमार्थमेव स्त्रीणां सुखसाधनमभिप्रैषि। मन्त्रलिङ्गानिच इतोऽपि किञ्चित्सूक्ष्मतरं परामृश्यमानानि पुत्रोत्पत्युत्तरकालमेव स्त्रीणां विवाहः कार्यइति प्रत्याययन्ति। भवांस्तु न तावद्दूरमालोचितवान्संभ्रान्तबुद्धिः। अहंतु ते तानि लिङ्गानि दर्शयिष्यामि तथाहि "**सोमः प्रथमो विविद**" इत्यादिके वधूंप्रति जप्ये मन्त्रद्वये द्वितीयमन्त्रे "**रयिश्च पुत्रांश्चादादग्निर्मह्यमथोइमामि**"ति पठ्यते। अनेन मन्त्रभागेण तृतीयपतिस्थानीयोऽग्निर्विवाह्यां स्त्रियं पुत्रांश्च मह्यं दत्तवानित्याह वरः। यदि विवाह्यमाना वधूः पुत्ररहिता स्यात्, कथमयं पुत्रदानरूपो मन्त्रार्थस्संगच्छतां। नहि जनिष्यन्ते पुत्राइति कृत्वा भाविपुत्रविषयतया मन्त्रार्थघटना युक्ता। कोहि नि-

र्णयः पुत्राजनिष्यन्तइति । जायन्तांवा कदाचित्कासांचित्तथाप्याशामोदककल्पोहि तदा मन्त्रार्थः पर्यवस्यति । एवंसति भाविनीं स्त्रियमुद्दिश्यापि विवाहकरणं शोभेत। नहि स्त्रीपुत्रयोरुभयोस्समुच्चित्य दानवचने कश्चिदर्थस्स्त्रीरूपस्तात्कालिकः, कश्चित्तु पुत्रः परंभावीति शक्यमर्धजरतीयं कल्पयितुं । मन्त्रस्तु "अदादि"तिलुङन्तप्रयोगेण दानक्रियां निर्वृत्तां बोधयन् स्त्रियमिव पुत्रानपि सहासिद्धानेव मुक्तकण्ठं ब्रूते । नखलु भूतभाविनोरर्थयोस्समुच्चित्यदानं घटते । अतीतत्वंतु भाव्यर्थे दानस्य सुतरां न सम्भाव्यते । तस्मात्सञ्जातपुत्राणामेव स्त्रीणां विवाहो न्याय्यइति श्रुत्यैव निर्विचिकित्सं प्रतीयते (१)

(२) तथा **"सोमाय जनिविदे"**इत्यादिषु होमार्थमन्त्रेषु **"प्रजां मुञ्चतु मृत्युपाशादि"**ति(१) **"यथेयं स्त्री पौत्रमघं न रोदादि"**ति (२) **सोऽस्यै प्रजान्नयतु दीर्घमायुरि"**ति (३) **अश्विनौच स्तनंधयन्तामि"**तिच (४) प्रजायामृत्युपाशमोचनमघाभावो दीर्घायुष्ट्वं रक्षणंच सोमाग्न्यादिदेवतादिभ्यः प्रार्थ्यमानं तात्कालिकपुत्रसद्भावमन्तरेण सर्वथाऽनुपपद्यमानं सपुत्रकस्त्रीणामेव विवाहकरणं व्यवस्थापयति । (२)

(३) अग्निप्रदक्षिणार्थेच **"तुभ्यमग्रे पर्यवहन्नि"** त्यादिमन्त्रे **"जायां दाअग्ने प्रजयासह"**इति प्रजासहितायाएव जायाया दानमुच्यमानप्यमुमेवार्थं प्रसाधयति । तथाच सपुत्रकस्त्रीदानमेव विवाहे शास्त्रीयमिति दातृधर्मोऽपि श्रुतिसिद्धोऽतिप्राचीनसंप्रदाय इतिच स्पष्टं निश्चीयते । (३)

(४) पतिगृहगमनाय रथारोहणकाले स्त्रियाअभिमन्त्रणार्थेषु मन्त्रेषु **"सम्राज्ञी श्वशुरे भवे"**त्यादिना **"प्रजायाश्च धनस्यच"**

इत्यन्तेन श्वशुरादीन्प्रतीव प्रजांप्रत्यपि सम्राज्ञीभावउच्यमानो विवाह्यायास्त्रियाः प्रजावत्वं प्रतिपादयति । (४)

(५) पथि गमनकाले वृक्षादिव्यतिक्रमनिमित्ते जप्ये **"या ओषधयो या नद्य"** इत्यादिमन्त्रे **"प्रजावतीं प्र त्वे मुंचत्वंहस"** इति प्रजासहितायास्त्रियाः अंहोमोचनमभिधीयमानं वध्वास्स्वप्रजासाहित्यं सम्मगुपकल्पयति । (५)

(६) **"आगन्गोष्ठं महिषीत्या"**दिषु होमार्थमन्त्रेषु **"प्रजायाआभ्यां प्रजापतइन्द्राग्नी शर्मयच्छतमि"**ति सिद्धवास्थितायाः प्रजायाश्शर्मप्रार्थनं क्रियमाणं नाप्रजस्स्त्रीविवाहे कथमपि घटते । (६)

(७) मन्वाद्यासुच स्मृतिषु द्वादशविधेष्वौरसादिपुत्रेषु सहोढो नाम पुत्रः परिगण्यमानः समुत्पन्नप्रजानां स्त्रीणां विवाहं श्रुतिस्मृत्याचारसिद्धं गमयति । तथा **"पाणिग्रहणादि गृह्यं परिचरेत्स्वयं पत्न्यपिवा पुत्रः कुमारीत्या"**दिना विवाहसमयादारभ्य पत्न्यागृह्याग्निपरिचरणाधिकारवचनेन तत्कर्मयोग्यं वयः प्राप्तैव कन्या विवाहार्हेति यथा व्यवस्थापयसि तथा तत्रैव सूत्रे **"अपिवापुत्र"**इति विवाहादारभ्यैव पुत्रस्यापि अग्निकर्माधिकारवचनेन तत्कर्मयोग्ये वयसि वर्तमानो यः पुत्रस्तथाविधपुत्रसहिता वधूरेव विवाहयोग्येति व्यवस्थापयामः । तथाच पितृगृहएव स्थितायाः ऋतुमत्यास्संपादितपुत्रायाश्च स्त्रियाः पश्चादेव विवाहः कार्यइति वैदिकसिद्धान्तः यदि दैवात्काश्चिदप्रजसएव स्युः, तदा तासां विवाहएवानावश्यक इतिच कल्प्यते । अन्यथा प्रागुदाहृतानां मन्त्राणामर्थस्य बाधापत्तिः। नह्येवं व्यवस्थापने कश्चिद्विरोधोस्ति । नच स्मृतिवचनविरोधश्शङ्कनीयः । कोहि नाम स्मृतीरर्वाचीनकालभवाआद्रियेत । स्मृतीनामपि

मूलश्रुत्यनुमापकत्वेन श्रौतैरेवोदाहृतालिङ्गैर्विध्यन्तरमेवानुमास्यामहे । यदि श्रुतिवचनविरोधस्स्यात्स परं परिहर्तव्यः । नह्युक्तसिद्धान्तविरोधितया प्रत्यक्षमेव श्रुतिवचनं किञ्चित्केनचिच्छक्यं प्रदर्शयितुं। तस्मात्सपुत्रकस्त्रीविवाहएव वैदिकास्सिद्धान्तइति निपुणतराणां तार्किकमूर्धन्यानां सूक्ष्मतरोऽभ्यूहइति ॥

अभ्युपेत्यतु लिङ्गानि भवदुदाहृतानि सर्वमेतदेतावत्प्राञ्चितं । परमार्थतस्तु पदवाक्यप्रमाणाभिज्ञैः पण्डितैः परामृश्यमानानि भवल्लिङ्गानि लिङ्गान्येव न भवितुमर्हन्ति। तथाहि "अघोरचक्षुरि"त्यादिषु भवदुदाहृतेषु मन्त्रेषु सर्वत्रापि अपतिघ्नि एधि शन्नो भव द्विपदे (१) तन्वं संसृजस्व (३) मया पत्या जरदष्टिर्यथा असः (५) सप्तपदा भव सख्यंते गमेयं मायोषं मायोष्ठाः संकल्पावहै अनुव्रता भव एहि सूनृते (६) पत्युः आरोह विराड् भव श्वशुरे भव श्वश्र्वां भव सम्राज्ञी भव विराड् भव (७) भुवने शोचेष्ट प्रजया ते समृद्ध्यतां गार्हपत्याय जागृहि तन्वं संसृजस्व (८) इति लोडन्त लेडन्तलिङन्तानामन्यतमएवशब्दः प्रयुज्यते नान्यो लकारः। लोडादित्रयस्यच सत्स्वपि विद्याद्यर्थेषु मन्त्रसन्दर्भे प्रार्थनमेवार्थो भवत्यौचित्यादिति सर्वसंप्रतिपन्नं। प्रार्थनञ्च सिषाधयिषितएवार्थे संभवति न सिद्धे वस्तुनीति तद्वाचकपदप्रयोगोऽपि तद्विषयएव साधुर्भवति। नहि सिद्धमर्थमुद्दिश्य सिषाधयिषितताबोधकं लोडाद्यन्तपदं प्राकृतोऽपि प्रयुङ्क्ते, किमु वक्तव्यं भगवत्यनादिसिद्धे मन्त्रसंन्दर्भे। नहि राजानमेव सन्तं पुरुषमुद्दिश्य "राजाभवे"तिप्रयुञ्जानो भवत्यविपर्यस्तबुद्धिः। अराजनि तु तत्सम्भावनागोचरे युक्तेयमाशीरभिधातुं "राजाभवे"ति। अत एव "राजा भव युध्यस्व" "राजन्युद्ध्यस्वे" त्यनयोर्वाक्ययोरर्थे

भूयान्भेदइति संबोधनविभक्तिविधौ शब्दशास्त्रे डिण्डिमाघातः । तदेवंभूतेषु लोडाद्यन्तपदेषु परामृश्यमानेषु तद्धटितैर्मन्त्रैर्विवाह्यमानाया वध्वास्तनुसंसर्गयोग्यताऽऽदिकं वरेण प्रार्थ्यतइत्येवमन्त्रार्थोऽवगम्यते । विवाह्यायां च वध्वां संसर्गयोग्यताऽऽदेस्तत्कालभवत्वे तस्य सिद्धत्वेन मन्त्रैः क्रियमाणं तत्प्रार्थनं राज्ञि राजत्वप्रार्थनमिव उन्मत्तवचनमापद्येत । एतेन बालिकाविवाहे मन्त्रार्थस्सर्वोऽप्याशामोदकलपस्स्यादिति अव्युत्पन्नानां भ्रमः परास्तः । आशामोदकस्थानीयस्यासिद्धस्याभिलषितार्थस्य साधनार्थौ मन्त्रप्रयोगइति स्थितावेवहि मन्त्रा अर्थवन्तस्स्युः । नखलु मुखमोदकमेव चर्व्यमाणं साधयितुं मन्त्रापेक्षेति मूढमन्तरेण कश्चिद्ब्रूयात् । नहि कृतमेव कुर्वन्ति भवन्ति साधनानि नवा ज्ञातमेव ज्ञापयन्ति प्रमाणानि । तथाच अमूनि "युवा भूयादिति" वचनमिव सुखकरत्वशरीरसंसर्गित्वजरदङ्गत्वसख्यैश्वर्यसम्राज्ञीभावप्रसवाग्निपरिचरणादिकर्मयोग्यताप्रार्थनां बोधयन्तो वैवाहिकमन्त्रास्तद्योग्यतामनापन्ने वयसि वर्तमानां वधूं प्रत्येव प्रयुज्यमाना अर्थवन्तो भवन्ति न वृषस्यन्त्यां तरुण्यामिति क्व भवदभिमतलिङ्गसद्भावः । एवञ्च भवदुदाहृतलिङ्गान्येव भवद्विपरीतार्थसाधकानि विरुद्धानि प्रौढाविवाहप्रतिषेधं गमयन्तीति अलमेतदेव प्रमाणं बालिकाविवाहएव शास्त्रीयइति वदतां । यत्तु अप्रौढायामिमे मन्त्राः प्रयुज्यमानाः तत्कालार्थशून्यास्सन्तो मृतप्राया भवन्तीति,, तद्विपरीतं । अमृतप्रायाएवहि पुण्यतमा मन्त्राः बालिकामुद्दिश्य प्रार्थनारूपाअभिलषितभाविसकलश्रेयःप्राप्तिसाधनार्थत्वेन प्रयुज्यन्ते । भवानेव पुनस्तत्तादृशानपि मन्त्रविशेषान् प्रौढाविषयतया सिद्धार्थानुवादकत्वेन कृतकारितामापाद्यानर्थकत्वेन कष्टं मारयितुमभिप्रवृत्तो दृश्यते । यदपि भाष्य-

र्थाभिप्रायेण मन्त्राः प्रवृत्ताइति वैदिकास्साधयेयुरिति परिहासवचनं तदस्माकं स्वस्त्ययनमेव। नूनमेते वयमाब्रह्मणो वैदिकाः वैदिकएव वेदार्थमधिगन्तुमधिक्रियते शक्नोतिच नावैदिकः। अवैदिकोहि लडन्त लोडन्तादेर्विभागेप्यव्युत्पद्यमानोऽनधिगताक्षरार्थरीतिर्यदि वेदार्थव्याख्यानाय प्रवर्तते तदा नूनमीदृगेवापदापद्येत। नात्र भवतोऽन्यत्साक्ष्यन्तरं गवेषणीयं। एतेन सर्वाणि मन्त्रलिङ्गानि व्याख्यातानि भवन्ति मूर्धाभिषिक्तचतुर्थवर्जं।

तथाच सिद्धं

**लोडादिकं प्रयुञ्जाना गूढं भगवती श्रुतिः।**
**भवादृशानां दुर्भावमच्छिनन्मूलतोपि च ॥ १ ॥**
**अनेनैव प्रार्थनेन विवाह्यामतथाविधाम्।**
**अप्रौढां गमयन्तीसत्यनुगृह्णातिच स्मृतीः ॥ २ ॥** इति।

सर्वमिदमन्तरभिप्रेत्यैव सर्वज्ञो मनुराह **"पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः।** (८-२२६) इति। कन्याशब्दश्चानृतुमत्यामेव मुख्यो मनोरभिमतइति निरूपयिष्यते। एतेन वैतण्डिकतार्किकोत्प्रेक्षितस्सपुत्रस्त्रीविवाहोऽपि प्रत्युक्तः पुत्रतद्दीर्घायुष्ट्वादेरभिलषितवस्तुनस्सर्वस्यापि मन्त्रेषु प्रार्थ्यमानतया तात्कालिक सद्भावायोगात्। नहि निरवग्रहैश्वर्यशक्तिशालिभ्यो देवेभ्यस्सकाशादभिलषितार्थप्रार्थनावेलायामभ्युदयार्थिनामियदेवप्रार्थनीयं नातोऽधिकमिति नियमे हेतुरस्ति। तस्माद्विवाह्याया भोगयोग्यत्वगृहकर्मसामर्थ्यादिकमिव सन्तानसम्पदादिकमपि सर्वमभिलषितं मन्त्रैर्भाव्येवाशास्यते।

अतश्च प्रार्थ्यमानस्य प्रार्थनासमानकालिकत्वभ्रमेणार्थान्तरकल्पनं न संभवति। वस्तुतस्तु संभिन्नबुद्धीनां पदवाक्यप्रमाणपरि

चयविधुराणां जनानां व्यामोहमात्रमेतत् । नहि श्वश्रूश्वशुरननान्द देवरादिसम्राज्ञीभावो मन्त्रेणोच्यतइति तेषामेकतमाभावे विवाहो ऽशास्त्रीयइति कश्चिद्भ्राम्येत् ।

यदपि "**सोमः प्रथमो विविद्**,, इत्यादिमन्त्रोक्तं मूर्धाभिषिक्तं चतुर्थं लिङ्गं तद्विचारयामः । सत्यं सोमगन्धर्वा ग्नयस्त्रयो देवाः क्रमेण योनिरोम, कुच, रजः, प्रादुर्भावकालेषु भवन्ति वध्वाः पतयइति स्मर्यन्ते । तथापि त्रयाणांमध्ये कतमस्य आधिपत्य काले कन्यायाः विवाहकरणं मन्त्रैर्गम्यतइति इदमिह संप्रधार्यम् । नहि रजःप्रादुर्भावोत्तरमग्निरधिपतिरित्येतावन्मात्रेण विवाहोऽपि तद नन्तरमेवेति शक्यं व्यवस्थापयितुं । तुल्यमेवहि सावधिकाः कन्यकानां तिस्रोऽवस्थास्समाश्रित्य त्रयाणां देवानां पतित्वभोक्तृत्वे स्मृतिः प्रत्याययति । मन्त्रस्तु अवस्थाविशेषानाश्रयणेन पतित्वमात्रमाह । तत्र कस्यचिद्देवस्य स्वभूते काले विवाहकरणमितिनिश्चिते देवान्तर योरिह कथनं वस्तुसदर्थपरमिति वक्तव्यं । तत्र कदा विवाहइति निश्चिनोषि । ननु नेदमस्माभिर्निश्चेतव्यं यतो मन्त्रएव स्पष्टमाह तृतीयपतिभूतस्य अग्नेःपश्चादेव मनुष्यस्तुरीयःपतिर्भवतीति "**तुरीय स्ते मनुष्यजा**,, इति । तत्र कुतस्सन्देहः । अग्न्यधिकारयोग्ये रजो विशिष्टे वयसि वर्तमानैव कन्या मनुष्यस्य विवाह्येति स्फुटं निश्चीयते । बाढमेवं स्वाशयानुगुणं निश्चिनोषि । यदि सोमगन्धर्वयोर्निवृत्ताधिकारयोरग्नेश्च अधिकारप्रादुर्भावे ऋतोःपरस्ताद्विवाहइति निश्चिनोषि एवंसति मन्त्रान्तरं विरुध्यते तन्नालोचयसि । अत्रहि "**उदीर्ष्वातो विश्वावसो**,, इति "उदीर्ष्वातःपतिवती"तिच मन्त्रद्वयमाम्नायते । तच्च मन्त्रद्वयं विवाहचतुर्थदिनापररात्रे दम्पत्योर्मध्ये गन्धर्वावा-

हनपूर्वकमलंकृत्य स्थापितो योऽयमौदुम्बरादिगान्धर्ववृक्षदण्डस्तस्यो त्थापनेकर्मणि विनियुज्यते । अनेनच गन्धर्वाख्यद्वितीयपतिः स्तुति नमस्कारादिपूर्वकं विवाहितां वधूं मम पत्नीं विहाय पितृगृहगतामन्यां कन्यां प्रति त्वया गन्तव्यमिति वरेण प्रार्थ्यते मन्त्रद्वयेनापि । नतु तृतीयप्रथमपतिभूतावग्नीषोमावभ्यर्थ्येते, प्रथमस्यसोमस्य निवृत्ताधि कारत्वात्, अग्नेश्च असञ्जाताधिकारत्वात्, अस्वामिनिच स्वत्वत्या गाभ्यर्थनस्यासंगतत्वात् । अनेनच स्पष्टं विज्ञायते गन्धर्वाधिकार योग्येवयसि वर्तमाना वधूरेव विवाहार्हा भवतीति । यदित्वाग्नेयेवयसि ऋतुमति विवाहकरणमभिप्रेतं स्यात् तदा तस्य स्वभूता कन्या तत्स काशादेव प्रार्थयितव्येति अनधिकारिणोगन्धर्वस्य कन्यासकाशादुत्थान प्रार्थनं विरुद्धमेव स्यात् । नहि प्रथमपतिस्सोमः प्रार्थ्यते । तथाच विवाहस्य अग्निस्वभूतऋतुकालसंबन्धगन्धमप्यसहमानमिदं मन्त्रद्वय मपि चतुर्थदिनापररात्रावधि गन्धर्वस्य स्वभूते ऋतोःप्राचीनएव वयसि कन्या वर्ततइति धीरतरमाघोषयति ॥

अपिच सोमगन्धर्वाग्नीनां कन्यकासु भोक्तृत्वं स्मर्यमाणं कीदृ- शमभिप्रैषि । दृष्टानुसारेणैव देवानामप्येषामस्मदादिवदेव भोगइति कल्पने प्रत्यक्षबाधः । नहि अग्निनाऽहमिदानीमनुभूताऽस्मि सोमेना हमिदानीमिति कयाचित्स्त्रिया कदाचिदनुभूयते । आद्ययोस्सोमगन्धर्व योर्भोगासंभवश्च दृष्टानुसारेण भोगयोग्यकालस्य स्त्रीषु तयोरभावात् । तत्रामानुषस्वभावानां देवानामन्यादृशएव मानुषविलक्षणोमनःप्रीत्यादि रूपः कोऽपिभोगप्रकारइति कल्पयितव्यं । भोगः परमग्न्यादीनामस्म दनुभवागोचरोदृष्टविलक्षणः, तद्धेतुना रजःप्रादुर्भावेण परमस्मत्प्रत्यक्षे ण भवितव्यमिति तव केनोपदिष्टं । निश्चितेच तथाविधेभोगे यक्षा

नुरूपबलिन्यायेन तद्धेतूरजःप्रादुर्भावकालेपि न मानुषप्रत्यक्षः किन्तु अविज्ञातएव आन्तरः कश्चित्प्रादुर्भावइति निश्चीयते। प्रसिद्धंहि सत एव रजसःकालेन बहिर्निर्गमादभिव्यक्तिरिति शरीरशास्त्रे। भगवान् व्यासोऽपि **"पुंस्त्वादिवत्तस्य सतोऽभिव्यक्तियोगात्,,** (ब्रह्म-सू–२–३) इतिदृष्टान्तरूपेण सतएव पुंस्त्वादेस्स्पष्टमभिव्यक्तिमाचष्टे। तथाच अग्निभोगयोग्ये वयसि वर्तमानायास्त्रिया विवाहइति कल्पयतोऽपि तव व्यर्थःप्रयासस्यात्, त्वदभिमतरजस्वलात्वस्य असिद्धेः चतुर्थदिनापररात्रे गन्धर्वोद्वासनार्थेकर्मणि विनियुक्तस्य मन्त्रद्वयस्य बाधापत्तेश्च। अपिच सोमादीनां पतित्वमात्रमेव मन्त्रोवदति न भोक्तृत्वं। अवस्थाविशेषास्तु स्त्रीणां तत्तदनुगुणास्सर्वथा मन्त्रेण न व्यञ्जनयाऽपि बोध्यन्ते। तत्रैवंसति स्मृतीनामर्वाचीनकालभवत्वाच्छ्रुतिमात्रे श्रद्धालुतामात्मनोऽभिनयतामत्रपरं स्मृतिश्रद्धा कस्मादाविर्भवतीति न निश्चीयते। तस्मान्मूर्धाभिषिक्तमपि लिङ्गं विचार्यमाणं बालिकाविवाहमेव स्थूणानिखननन्यायेन दृढीकरोतीति सिद्धम् ॥

यदपि श्रौतं युवतीविवाहसाधकं लिङ्गान्तरमुपन्यस्तं, वधूकामायहि सोमाय स्वयं पतिंवरां सूर्यानाम स्त्रियं सूर्योददाविति **"सोमोवधूयुरभवदश्विनास्तामुभावरा। सूर्यां पत्ये शंसन्तीं मनसा सविताऽददात्,,** इति मन्त्रे समाम्नायते ऋग्वेदे। तत्र **"पत्ये शंसन्तीं,,** इत्यस्य पर्याप्तयौवनामित्यर्थविवरणं भाष्यकारेण कृतं दृश्यते। तथाच ऋतोरनन्तरमेव सूर्याया विवाहोनिर्वृत्तइति स्पष्टं प्रतीयतेइति। तत्र ब्रूमः बाढमेवं प्रतीयतएव। तथाऽपि नेदं लिङ्गमाश्रित्यास्मदादीनामपि स्त्रियोयुवतीभवन्त्यो विवाहयितुं शक्यन्ते, देवत्वात्तेषां। देवाःखल्वेतेसोमसूर्यासवितृप्रभृतयो मन्त्रेण वर्ण्यन्ते।

नह्यस्मदादिवद्देवेषु वर्णाश्रमविभागोऽस्ति । तन्मूलकविधिनिषेधविषय तावा तेषां क्वचिदस्ति प्रमाणासिद्धा । वर्णाश्रमबहिर्भूतानांच सतांतेषामाचारो न वर्णिभिराश्रमिभिश्च स्वयमुपादातुं शक्यते । नापि तदनुष्ठानं युज्यते अन्यधर्मत्वात्तस्य । अन्यधर्मश्चान्येनानुष्ठीयमानो न श्रेयसे स्यात् "**परधर्मो भयावह**,, इतिभगवदुक्तेः। निषिद्धत्वाच्च न तदाचरणमस्मदादीनामुपादेयं भवति । निषिध्यतेहि देवाचरणं मनुष्याणां "**न देवचरितं चरेत्**,, इति । अन्यथाहि गुरुदारगमनादिः भूयान्धर्मविप्लवो देवेषु दृष्टइति स सर्वोपि मनुष्यान् प्रत्यपि अनुष्ठेयो युक्तश्चापद्येत । अपिच नानेन मन्त्रेण देवानामपि युवतीविवाहो धर्मइति चोद्यते । किंतर्हि उपाख्यानमात्रमेतद्भवति इदमनेन इत्थमनुष्ठितमिति तत्र वृद्धकन्योपाख्यानसमाधानेनैव इदमपि समाहितं भवति । तस्मान्नेदं लिङ्गं प्रौढाविवाहसाधकं भवति ।

यदप्यन्यदुक्तं "**सकूतिमिन्द्रसच्युतिं सच्युतिं जघनच्च्युतिं कनात्काभां नआभर प्रयप्सन्निव सक्थ्यौ**,, इति केनाचिन्मन्त्रेण इन्द्रंप्रति भोगलंपटां स्त्रियमाहरेति प्रार्थनं क्रियमाणं दृश्यते। तच्च ऋतुमत्याएव स्त्रिया विवाहयोग्यतां सूचयतीति । अत्रब्रूमः । कामंदृश्यतएव तथाविधं प्रार्थनं । किमेतावता सिध्यति विवाहे नहीदंप्रार्थनं विवाहाङ्गमित्यत्र प्रमाणमस्ति । नखल्वस्यमन्त्रस्य विशिष्य विनियोजकं प्रमाणं किञ्चित्प्रत्यक्षमुपलभ्यते । असतिच प्रमाणे कथमनेनमन्त्रेण विवाह्याया युवतीभावमुन्निनीषसे, अतिप्रसंगापत्तेः । अनिर्धारिताङ्गभावेन मन्त्रेण यथाभिमतमर्थविशेषनिर्णयेहि सर्वं सर्वत्र निर्णीयेत । नचैतद्युक्तं । अतएव यत्रक्वापि काम्येकर्मणि लिङ्गानुसाराद्विनियोजनीयोऽयं मन्त्रइति प्राञ्चोऽभिप्रयन्ति । काम्यकर्माङ्गभूतेच

मन्त्रे कामुकानां कामनाविलसितमेव लोकसिद्धमनूद्येत नापूर्वःकश्चि-दर्थस्स्यात् । तथाच कामुकमनोरथानुवादिनाऽनेन मन्त्रेण कथमनुष्ठे-यरूपःकश्चिदर्थस्सिध्यतीति शक्यं वदितुं । अस्तुवा कथंचिदस्यमन्त्रस्य विवाहसिद्ध्यर्थेजपे विनियोगकल्पनं तथाऽपि चिराय विवाहमलभमानः उत्कटकामनावान् पुरुषएवाऽस्मिन्जपेऽधिक्रियेत न सर्वोऽपि । सचा यमधिकारी स्त्रियं प्रार्थयमानः दृष्टमेवफलं भोगाख्यमभिसन्धाय प्रार्थयेदिति युक्तं, दृष्टस्यैवपुरस्फूर्तिकत्वात् लोकस्वभावाच्च । तथाच मन्यामहे ओदनपाकसूत्रशाटकन्यायेन भाविनमेव भोगोपयोगिगुणं "**सकूर्तिं जघनच्युतिमि**,, त्यादिभिरभिसन्धाय प्रार्थयतीति । एवंच सति वचनान्तरविरोधोऽपि नापतति । अन्यथाहि अनृतुमतीविवाह बोधकवचनान्तरविरोधोऽपरिहार्यआपद्येत । किञ्च अवश्यंचैतदेवं वि-ज्ञेयं । अन्यथाहि मन्त्रोक्तविशेषणस्य जघनच्युतित्वादेस्सर्वदा स्त्रिया मसंभवाद्बाधएवस्यात् । नखलूक्तगुणविशिष्टैव सर्वदा काचित्स्त्री भव-तीत्यास्तिसंभवः । अतश्च गत्यन्तराभावात् भाव्येवासौगुणोऽभिप्रेतइति अकामैरप्यभ्युपगन्तव्यं । नच वार्तमानिकार्थबाधे भूतं तं गुणमादा-यापि उपपद्यतइति किं भाविग्रहणेनेतिशंक्यं । एवंसति निवृत्तरज-स्कायाअपि जरठायास्तव विवाह्यत्वापत्तेः, अतीतग्रहणापेक्षया आ-गामिग्रहणस्यैव युक्तत्वाच्च । तस्मान्नेदमृतुमतीविवाहसाधकमित्यास्ता मेतत् ॥

यदप्युच्यते "**कन्याइव वहतुमेतवा**,, इति "**इयमेव सा या प्रथमा व्यौच्छादि**,, तिच मन्त्रद्वयमस्ति । तत्राद्ये पतिप्राप्त्यर्थं कन्यकाभिः कुतूहलेन क्रियमाणमाभरणधारणं क्वचिदर्थे निदर्शन तयोदाह्रियते । द्वितीये सृष्ट्याद्यप्रभातस्य उत्तरोत्तरप्रभातजनकत्वे

उत्तरोत्तरप्रजाजननी नववधूरुपमानत्वेन उदाह्रियते । इदमुदाहरण द्वयं ऋतुमतीविवाहं गमयतीति । तदपि भ्रममात्रं । आद्यमन्त्रेहि पतिप्रेप्सया भूषणधारणमात्रमुच्यते कन्यकानां न यौवनमपि । नचेदं यौवनस्यलिङ्गमिति शक्यं प्रतिज्ञातुं । नह्याभरणधारणोत्साहः स्त्रीणां यौवनोत्तरकालमात्रभावीत्यत्रास्ति प्रमाणं, अन्यथाऽपि दर्शनात् । प्रागपि यौवनात्त्रिचतुरहायन्योऽपि बालिका भूषणधारणकुतूहलिन्यो बहुधा स्वमनोरथं वर्णयन्त्यः प्रत्यक्षमेवदृश्यन्ते । तत्रकथमेतदवष्टम्भेन यौवनं शक्यं व्यवस्थापयितुं । तथाद्वितीयेऽपि निर्वृत्तविवाहा वधूरेव उपमानमुपादीयते नाप्राप्तविवाहा । साच कामं प्रजननसामर्थ्यं युवतीभावंचापद्यतां । किमेतावता विवाहप्रागवस्थायां यौवनमुत्प्रेक्षितुं शक्यम् ।

तस्मान्नेदमप्यृतुमतीविवाहसाधकं भवितुमर्हति । अथापि कथं चिद्भवतश्श्रद्धामनुरुध्य भवदभिमतमभ्युपगच्छामः तथाऽपि न ब्राह्मणेषु अनेनलिङ्गेन युवतीविवाहश्शक्यते साधयितुं "**कन्यका**,, इति "**वधूरि**,, तिच सामान्यग्रहणात् । नह्यत्र मन्त्रद्वयेऽपि ब्राह्मण कन्यका एवंविधाइतिकथने विशिष्य किञ्चिन्मूलमुपलभ्यते । सामान्यतः प्रवृत्तंच अविरुद्धं यंकञ्चिदर्थमादायाप्युपपद्यमानं नविरुद्धविशेष विषयेऽपि पर्यवसानमपेक्षते । अपिच दृष्टान्तमात्रमेतदुभयमपि भवति । दृष्टान्तकथनेचसर्वत्र तस्यान्यतःप्रसिद्धिमात्रमपेक्षणीयं नपुनस्तेन विध्यनुसारिणा सदाचारसिद्धेनवा भवितव्यमिति नियमोऽस्ति । नखलु "**योषाजारमिवप्रियमि**,, ति "**मर्यो न योषामभ्येतिपश्चादि**,,ति च श्रुत्युदितमेवदृष्टान्तद्वयमवष्टभ्य स्त्रीणां जारपुरुषानुसरणं पुंसांच योषितःपृष्ठतोगमनंच वेदसिद्धोधर्मइति प्राचीनाचारइतिच कश्चिन्निश्चिनु-

यात्। तथानिश्चिन्वन्वा भवति वेदार्थवेदी। तस्मादन्यपरवेदवाक्येषु यंकञ्चिदर्थाभासं कल्पयित्वा तेनचार्थान्तरस्य साधनमिदमसदभ्यूह मात्रमितिसिद्धम् ॥

तदेवं विचारितदिशा विवाहाङ्गभूतेषुमन्त्रेषु ततोऽन्यत्रवा न क्वापि श्रुतिषु ब्राह्मणकन्यकानामृतोःपरस्ताद्विवाहसूचकं किमपि लिङ्ग मुपलभ्यते। प्रत्युत तथाभासमानानि सर्वाण्यपि लिङ्गानि सूक्ष्मतः परामृश्यमानानि बालिकाविवाहमेव द्रढयन्तीति निरूपितं। अन्यान्यपि श्रौतलिङ्गान्यत्रविषये दर्शयिष्यामः। तथाऽऋतुमतीविवाहस्यात्यन्तनिन्द्यताबोधकमपि श्रौतमेव वचनं प्रदर्शयिष्यामः। तत्रतावत् तैत्तिरीयसंहितायां सप्तमेकाण्डे समाम्नायते "**प्रजापतिरकामयत प्रजायेयेति स मुखतस्त्रिवृतं निरमीत तमग्निर्देवताऽन्वसृज्यत गायत्रीछन्दो रथन्तरंसाम ब्राह्मणोमनुष्याणामजःपशूनां तस्मात्ते मुख्या मुखतोह्यसृज्यन्त**,,इति। तत्रगायत्रीछन्दसासह ब्राह्मणजातेस्सृष्टिवचनस्य तात्पर्यं मन्त्रदर्शनकुशला महर्षयएव स्मरन्ति "**छन्दस्सुपादाक्षरसमुदायवदब्दसमूहउपनयने**,, (हारीत)इति। यस्याजातेर्येन छन्दसासह सृष्टिरत्र समाम्नायते, तज्जातीयस्य तच्छन्दःपादाक्षरसंख्यापरिमिते वयसि उपनयनंकार्यमिति तदभिप्रायः। त्रिपदायागायत्र्याश्च प्रतिपादमष्टावक्षराणि संभूयच चतुर्विंशतिरक्षराणि भवन्ति, तथाच श्रुतिः "**अष्टाक्षरा गायत्री**,, इति "**चतुर्विंशत्यक्षरा गायत्री**,, इतिच। एवञ्च गायत्रीपादाक्षरसंख्यापरिमिते अष्टमएव वयसि ब्राह्मणजातीयानामुपनयनं कार्यमिति प्रकृतश्रुतेर्गूढोऽभिप्रायः। अतएव त्रिष्टुब्जगतीछन्दोभ्यांसह सृष्टतया तत्रैवसमाम्नातयोः राजन्यवैश्ययोस्तत्पादाक्षरसंख्यापरिमिते क्रमादेकादशे द्वादशे

च वयसि उपनयनं कार्यमिति सिध्यति । तथाचाष्टमैकादशद्वादशेषु वर्षेषु क्रमाद्ब्रह्मक्षत्रविशामुपनयनं मुख्यमिति विदधानानां स्मृति वचनानामियमेव श्रुतिर्मूलं भवति । स्मरतिच मनुः

**"गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।**
**गर्भादेकादशे राज्ञः गर्भात्तुद्वादशे विशः,, ॥ (२–३६)इति ।**

उपनयनञ्च त्रैवर्णिकानां स्त्रीपुंससाधारण्येन सर्वेषामपि मुख्य स्संस्कारः, तदभावे व्रात्यतास्मरणात् । सचायमुपनयनसंस्कारस्स्त्रीणां विवाहएवेति निरूपितं पुरस्तादेव । उपनयनस्थानापन्नस्यच स्त्रीषु विवाहस्य उपनयनार्हकालएवकालः नातोऽन्यइति युक्तंप्रतिपत्तुं । मनुरपि अष्टमंवयो ब्राह्मणानामुपनयनकालइतिनिरूप्य अनन्तरं स्त्रीणां जातकर्माद्युपनयनान्तसंस्कारविधिप्रसंगे

**"अमन्त्रिकातु कार्येयं स्त्रीणामावृदशेषतः ।**
**संस्कारार्थं शरीरस्य यथाकालं यथाविधि ॥**
**वैवाहिकोविधिस्स्त्रीणां संस्कारो वैदिकस्स्मृतः,, ॥(२-६६)**

इतिवचनेषु **"यथाकालमि,,** त्यनेनयस्यकर्मणोयो मुख्यकाल तया पूर्वमुक्तस्तं कालमनतिक्रम्यैव स्त्रीणामपि तत्तत्कर्मानुष्ठेयमिति स्मरति । स्मृत्यन्तरवचनञ्चामुमर्थं विवृणोति तद्यथा

**"विवाहंचोपनयनं स्त्रीणामाह पितामहः ।**
**तस्माद्गर्भाष्टमश्श्रेष्ठो जन्मतोवाऽष्टवत्सरः,, ॥ (यम) इति ।**

तस्माद्गायत्रीछन्दसासहसृष्टानां ब्राह्मणजातीयकन्यकानामुपनयनस्थानीयो विवाहो गर्भाष्टमएववयसि कर्तव्यइति साक्षादेवश्रुति सिद्धोमुख्यःपक्षः । यदातु दैवाद्दुपाघातान्मानुषाद्वा मुख्यपक्षोऽयमनुष्ठातुं न शक्यते तदा समनन्तरक्षत्रियजातीयोचितोधर्मो युक्तः परि-

अर्हीतुं । तस्याप्यनुष्ठानाशक्तौ महत्यामापदितु तदनन्तरवैश्यजात्यु चितोऽपिधर्मः कथंचिद्ग्राह्यो भवति । तथाच मनुर्दशमाध्याये वृत्ति निरूपणावसरे स्मरति

"अजीवंस्तु यथोक्तेन ब्राह्मणस्स्वेन कर्मणा ।
जीवेत्क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः ॥
उभाभ्यामप्यजीवंस्तु कथंस्यादिति चेद्भवेत् ।
कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम्,, ॥ इति ।

तथाच गर्भाष्टमे वयसि स्त्रीणामुपनयनस्थानीयोविवाहइति ब्राह्मणजातिधर्मो मुख्यः तदसंभवे क्षत्रियवृत्तिमाश्रित्य एकादशेवयसि तत्करणमापद्धर्मः, तस्याप्यसंभवेतु वैश्यवृत्या द्वादशेवयसि तत्करण मत्यन्तापत्कल्पः । तदेतत्सर्वमभिप्रेत्य नवमे मनुस्ममरति —

"त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षांवा धर्मे सीदति सत्वरः,, ॥ इति ।

यद्यपि "परधर्मो भयावह,, इति भगवानुपदिशति, तथापि आपदि परधर्मोऽप्यनुष्ठेयतया तत्रतत्रोपदिश्यतइति तदनुष्ठानमप्युप कल्पोभवति नतु मुख्यःकल्पः । अधिकमत्रमनुस्मृतिविचारावसरे निरूपयिष्यामः । तथाच आपत्कल्पतयाऽपि विवाहकरणं द्वादशाद्वयसःपुरस्तादेव ब्राह्मणीनां कथंचिद्धर्मोभवति नतु ततःपरस्तादिति प्रकृतश्रुत्यैव सिद्धं ॥

तथा लिङ्गान्तरमपि श्रुतिसिद्धमृतोःपुरस्तादेव स्त्रीणां विवाहो धर्मइति प्रत्याययति । द्वितीयाष्टकेहि ऋग्वेदे प्रथममण्डले भावयव्य सूक्ते "उपोप मे परामृश मा मे दभ्राणि मन्यथाः । सर्वाऽह मस्मि रोमशा गन्धारीणामिवाविका,, (ऋग्वेदे २-१-११-७)

इति काचिदृगाम्नायते । तत्रहि विवाहानन्तरं चिरायाप्राप्तरजस्का भावयव्यस्य पत्नी ऋतुमतीभावानन्तरमपि स्वविषये सन्दिहानमात्मनो भर्तारंप्रति निर्णयार्थमेवमाह हे भावयव्य अहं गन्धारदेशस्था अविरिव सर्वा रोमशा अस्मि सर्वेष्वप्यङ्गेषु विशिष्यचावाच्यदेशे उद्भूतरोमा भवामि । अतः मे मम अङ्गानि दभ्राणि अल्पानि अद्यापि अप्रौढा-वस्थानि मा मन्यथाः । यद्यविश्वासो मद्वचने तदा मे मम अङ्गानि उपोप समीपमागत्य त्वं परामृश स्वयमेवस्पृशन् जानीहि कथमिति । यतोऽहमीदृशी अतोमामप्रौढां माऽवबुध्यस्वइति । तत्रमन्त्रे भाष्ये ऽपि अयमर्थस्स्पष्टं निरूपितः । अनेनच मन्त्रेण ऋतोःप्राग्वहोःकाला त्पुरस्तादेव भावयव्येन विवाहःकृतइति निर्विचिकित्समुद्धोष्यते । ऋतोः परस्तादेव ब्राह्मणीनां वेदसिद्धोविवाहइति वदतामयं मन्त्रार्थः कथ मुपपद्येत । तस्मान्नरजस्वलाविवाहे वेदमूलकत्वगन्धोऽप्यस्ति ॥

अपिच यदेवभावयव्यसूक्ते रोमशत्वाख्यंविस्पष्टं प्रौढात्वचिह्न मुपन्यस्तं तदिह विवाहस्यचतुर्थदिनापररात्रे वधूं प्रतिजप्ये अनुवाक शेषे प्रार्थ्यमानंदृश्यते "शमूधो रोमशं हथः" इति । नचैतदृतु मतीविवाहे युज्यते । तत्र ऊधः गुह्येन्द्रियं रोमशं तल्लक्षणलक्षितं संहथः सम्यक्प्राप्नुतं इति रोमशत्वलक्षणं प्रार्थ्यते । तच्च विवाहा त्प्रागेव सिद्धतल्लक्षणायामृतुमत्यां युवत्यां प्रयुज्यमानं विफलमेवस्यात् । नच मन्त्रास्तात्कालिकार्थानुवादकाइति कल्पनं युक्तमिति निरूपित मधस्तादेव । अपिचेह मन्त्रे पुरस्तात्पुत्रादिमत्वमायुःकार्त्स्न्यञ्च आशा-स्यते, उपरिष्टाच्च देवपरिचरणं मध्येच ऊधसोरोमशत्वं । नच आद्य न्तयोराशास्यमानं तदुभयं तदानीन्तनं सिद्धमितिशक्यं संभावयितुं । तत्साहचर्याच्च मध्यस्थमप्याशास्यमानमूधोरोमशत्वं न तदाविद्यमान मिति युवतीविवाहवादे मन्त्रार्थो विरुध्येत ॥

तथा छन्दोगानामुपनिषद्यास्नायते "मटचीहतेषु कुरुष्वाटक्या सह जायया उषस्तिर्ह चाक्रायणइभ्यग्रामे प्रद्राणकउवास,, इत्यादि । तत्र आटकी अनुपजातपयोधरादिस्त्रीव्यञ्जना इति भगवदाचार्यभाष्यं । तथाच उषस्तिपत्नी विवाहेन जायात्वसम्पत्युत्तर कालं पयोधरादिस्त्रीव्यञ्जनप्रादुर्भावमप्यप्राप्ते वयसि अवर्ततेति स्पष्टं विज्ञायते । कथमिदं घटतां । परिपूर्णेहि स्तनयोन्यादिस्त्रीव्यञ्जनजाते चतुर्थदिनापररात्रकार्यव्यवायाख्यावश्यकाङ्गोपेतोविवाहएव ब्राह्मणीनां वैदिकोधर्मइतिहि भवत्सिद्धान्तः । किमयमुषस्तिरब्राह्मणः, किमिदं वाक्यमवेदकोटिप्रविष्टं, अथादसीयोविवाहोऽवैदिकत्वेनाधर्म्यः, सर्वथा भवदभिमतावश्यकाङ्गस्य तत्र गन्धोऽपिहि नास्ति । अथाधर्म्यमपीदृशं विवाहमुषस्तिरनभिज्ञतयाचकारेति कल्पनन्तु भवादृशानामपि न शोभते । नखलूषस्तिरस्मादृशादपिहीनप्रज्ञः । महान् हि ज्ञानातिशयउषस्तेस्तत्र समाम्नायते । यद्युषस्तिकालएवायमुपक्रान्तो बालिकाविवाहो न ततःप्रागिति मर्यादांकरोषि तदा अर्वाचीनकालभवोऽयमौषस्तआचारः कथंनित्यसिद्धेवेदे निबध्येत । वेदोनित्यसिद्धः स्मृतयःपरमर्वाचीनाइतिहि भवानपि ब्रवीति । तस्मादार्तवाविर्भावाद्बहुतरेअष्टमवयोरूपे पूर्वकालएवब्राह्मणीनां वेदबोधितो विवाहइति अयमेवार्थोऽत्रप्रतीयते । नचायमर्थः केनचिदपि विचालयितुं पार्यते ॥

अपिच विवाहात्प्रागेव ऋतुमत्यावृषळीभावं तत्परिणेतुर्वृषळीपतित्वं तद्दर्शनमपि वैदिकेषुकर्मसु दूरेपरिहरणीयमित्यादिकं श्रुतावेव प्रत्यक्षमाम्नायते । तथाहि तैत्तिरीयाणांखिलेष्वितिहासे श्रूयते

"पक्षैस्तु कुक्कुटोहन्ति निघर्षेणच सूकरः ।
आगतंगतया श्वानश्चक्षुषा वृषळीपतिः,, इति ।

वृषळीपतिर्हि दर्शनमात्रेणश्राद्धं हन्ति तस्मात्तद्दर्शनमपि पितृ कर्मणि दूरेवर्जनीयमितितदर्थः । अथ कोऽसौ वृषळीपतिः यस्यदर्शन मात्रमपि वैदिककर्मविरोधीति जिज्ञासायामनन्तरमाम्नायते

**"पितृगृहेषु या कन्या रजःपश्यत्यसंस्कृता ।**
**सा कन्या वृषळी ज्ञेया तत्पतिर्वृषळीपतिः,,** ॥ इति ।

अस्यचवचनस्य विवाहाख्यमुपनयनस्थानापन्नं संस्कारमप्राप्तैव या पितृकुले रजस्वलाभवति सा वृषळी तत्पतिरेव वृषळीपतिः इत्यर्थ स्स्फुटतरएव प्रतीयते । तथा—

**"वृषळीपतिभुक्तानि श्राद्धानिच हवींषिच ।**
**पितरो नप्रतिगृह्णन्ति दाता स्वर्गं नगच्छति,,** ॥ इति ।

हविश्शब्दितस्य दैवेकर्मणि दीयमानस्य द्रव्यस्यापि वृषळीपति संबन्धे वैफल्यं तत्रैवश्रूयते । इमान्येवश्रुतिवचनानि मूलमवलम्ब्य विवाहात्प्राग्रजोदर्शने महान्तं दोषं स्मृतिप्रणेतारोऽपि महर्षयस्तत्र तत्र स्मरन्ति । नत्वत्र विषये तेषां बुद्धिदोषःकश्चिदेव हेतुस्स्यादिति दुरुत्प्रेक्षा युज्यते । तानिच स्मृतिवचनानि पुरस्तादेवभूयांस्युदाहृता नि । उदाहरिष्यन्तेच कानिचिदवशिष्टानि उपरिष्टादपि । तमिमं वैदिकं संप्रदायमजानन्तःकिल प्राकृताःकेचित् विपरीतवासनाबलेन महर्षिष्व पि दोषमकस्मादेवारोपयितुमुत्सहन्ते । अतएव असंप्रदायविदःकेचित् स्वाभिमतविरोधप्रद्वेषेण अस्यइतिहासस्य श्रुतित्वेऽपि संशेरते । नैत द्युक्तं । ननुचाहमेवतावत्पृच्छामि श्रुतिरेवायमितिहासइत्यत्र किं प्रमाणमिति । मनुष्यएवभवानित्यत्र यत्प्रमाणं तदेवात्रापि प्रमाणमि ति ब्रूमः । ननु विषममेतत्प्रतिवचनं । प्रत्यक्षंह्यहं मनुष्यलक्षणोपेत स्सर्वैरप्युपलभ्ये नैवमयमितिहासश्श्रुतिलक्षणोपेतःप्रत्यक्षमुपलभ्यते ।

न। इतिहासोऽप्ययमुपलभ्यतएवप्रत्यक्षं वेदपरिपालकेषु श्रोत्रियकुलेषु। तत्रभवतां वैदिकवर्याणां गुरुशिष्यपरम्परैवहि वेदसद्भावे प्रमाणं नतु वैदेशिकानामुपदेशस्तन्मुद्रितपुस्तकंवा श्रुत्यादौ भवति प्रमाणं। ननु सत्यमेवमेतत् तथाऽपि खिलोऽयमितिहासइतिकृत्वा संशय्यते। नायं संशयोयुक्तः। अविशिष्टेहि खिलाखिलयोरुभयोरपि वेदभागयोरध्ययनसम्प्रदाये एकतरस्मिन्खिलमात्रे न युक्तमकस्मादवेदत्वाशङ्काकरणमास्तिकस्य। संप्रदायएवहि शरणं वेदत्वतदभावविज्ञानयोरस्मादृशानां। नचात्रार्धजरतीयं युक्तमाश्रयितुं। नखलु मन्वादिवदार्षेणज्ञानचक्षुषा मन्त्रदर्शनमस्माकं स्वप्नेऽपि संभावयितुं शक्यं। विनाप्रमाणं व्यवस्थितस्यार्थस्य निराकरणसाहसकरणेच सर्वव्यवस्थोच्छेदापत्तिः। तस्मादसदेतत् किमिदंश्रुतिरुतनेति संशयकरणं। तदेवमुदाहृतेषु वेदवचनेषु विचार्यमाणेषु ब्राह्मणकन्यकानामसंस्कृतानामेव रजोदर्शने महतोदोषस्य श्रूयमाणतया रजोदर्शनात्प्राग्विवाहकरणमेव तासां वेदमूलकोधर्मइति सिद्धम् ॥

---

## अथ गृह्यसूत्राणि विचारयामः ॥

तत्र गृह्यसूत्राणि विचार्यमाणानि ऋतुमतीविवाहस्यैवसाधकान्युपलभ्यन्ते। सर्वेष्वपिहि गृह्येषु विवाह्यकन्यालक्षणोपदेशे ऋतुमतीपर्युदासःक्वाप्यनुपादिश्यमानः प्रथमं तद्विवाहकरणेलिङ्गं। (१) तथा अनग्निकाशब्देन क्वचिद्गृह्ये कन्यकानिर्देशो द्वितीयंलिङ्गं। (२) त्रिरात्रब्रह्मचर्यविधिरनन्यथासिद्धस्तृतीयं। (३) चतुर्थदिनापररात्रे बोधायनापस्तम्बादिभिर्गृह्यसूत्रेषु कण्ठतएवसमावेशनशब्दितस्य मैथुनस्य विधानं मूर्धाभिषिक्तमृतुमतीविवाहस्य चतुर्थं लिङ्गं। (४) एवं

चतुर्षुकारणेषु परामृश्यमानेषु गृह्यसूत्राणि ऋतुमतीमेव विवाह्यांकन्यां व्यवस्थापयन्तीति केचित्संगिरन्ते ।

(१) अत्रब्रूमः इदं तावदयुक्तं यदुच्यते लक्षणोपदेशेषु ऋतुमतीपर्युदासोऽनुपदिश्यमानस्तद्विवाहे लिङ्गमिति । नहि गृह्यसूत्रेषु लक्षणकथने ऋतुमतीपर्युदासोनोपादिश्यतइत्येतावता तद्विवाहस्तेष्व भिप्रेतइतिशक्यं व्यवस्थापयितुं अन्यत्रधर्मशास्त्रेषु भूयसोऋतुमती विवाहप्रतिषेधोपदेशस्य श्रूयमाणत्वात् । नखलु क्वचिदप्रतिषेधमात्रा दन्यत्रश्रूयमाणः प्रतिषेधोऽपि नास्तीतियुक्तं प्रतिपत्तुं । अविरुद्धं ह्यपेक्षितमर्थजातमन्यतोऽप्यवश्यमुपसंग्रहणीयं भवति ।

किञ्च अनुपदेशोहि गृह्यसूत्रेषु द्विविधोहेतुर्भवति, क्वचिदर्थेष्व तात्पर्यं क्वचित्तु सत्यपि तात्पर्ये सर्वतःप्रसिद्धत्वं यथोपवीतधारणे । तत्र कुतोह्येषनिर्णयः अतात्पर्यादेवऋतुमतीविवाहनिषेधो नोपदिश्यते न पुनस्सत्यपि तात्पर्येनिषेधस्य सर्वतःप्रसिद्धत्वादेव नोपदिश्यतइति । वयन्तु पश्यामः तात्पर्यविषयएवसन्नृतुमतीविवाहनिषेधस्सुप्रसिद्धत्वा द्गृह्यसूत्रेषूपवीतधारणवन्नोपदिश्यतइति । तद्यथा उपनयनविधावुपवीत धारणं यद्यप्यापस्तम्बादयोगृह्यसूत्रेषु नोपदिशन्ति । नह्येतावता उपवीतधारणमनावश्यकमिति गृह्यसूत्राणामभिप्रायइतिनिश्चयकरणं साधु भवति, तस्य धर्मशास्त्रेषु नित्यधार्यत्वस्य संप्रतिपन्नत्वात् । तथाचा यमृतुमतीविवाहनिषेधोऽपि गृह्यसूत्रकृतामभिमतएवसन् अन्यत्रतत्प्रति षेधस्य सुप्रसिद्धत्वान्नोपदिश्यतइत्येव युक्तं कल्पयितुं नान्यथा ।

अपिच गृह्यसूत्राणि विवाहादीनां शास्त्रीयकर्मणां तत्रतत्र विधिषु विशकलितानां समुच्चित्यप्रयोगप्रदर्शनमेवाविषयं प्राधान्येना धिकृत्यप्रवर्तन्ते । न तत्रावश्यंविवाहयोग्यकालादिकमपि निरूपणीयं

भवति। तत्तु अन्यतएव धर्मशास्त्रान्निर्धारयितव्यं यद्यपेक्ष्यते। क्वचित्तु गृह्यसूत्रेऽपि तन्निरूपणं क्रियमाणं प्रासंगिकतया क्रियतइति न तद वष्टम्भेन ऋतुमतीविवाहतात्पर्योन्नयनं युक्तं।

किञ्च नेदमृतुमतीत्वं तदभावोवा कन्यकालक्षणकोटावन्तर्भवितुमर्हति एकान्तेन स्त्रीष्वभावात्। नह्यृतुमतीत्वं तदभावोवा स्त्रीष्वेकान्तेन जातुभवति। कालकृतंह्येतदुभयमपि तासु न स्वतःकश्चिदर्थो व्यवस्थितोभवति। यद्यृतुस्तदभावोवा कस्याञ्चिद्व्यवस्थितोभवति, तदा रुग्णैवासौ स्त्री भवति क्लीबैववा। उभयथाऽपि तदानीमविवाह्यैव सा भवति। ऋतुयोग्यतातु विवक्ष्यमाणा पुरस्तादपि स्त्रीणां भवतीति न भवदभिमतार्थसिद्धये स्यात्। तस्मान्नात्रकिञ्चिदपि लक्षणकोटौपरिगणनीयं भवति सत्यपि तात्पर्ये। कालचोदनास्वेवतु विवाहस्यायमपि कश्चिदन्तर्भवन्भवेत्, यथाऋतोःपरस्तात्पुरस्ताद्वा विवाह्या इति नतु स्त्रीलक्षणपक्षइति पण्डिता मन्यन्ते। तस्मात्प्राथमिकं भवदुदाहृतं लिङ्गमाभासमात्रमिति सिद्धम् ॥ १ ॥

यदप्यन्यत् जैमिनीयेहिगृह्ये विवाह्यायास्त्रिया लक्षणविधौ अनग्निकाशब्दःप्रयुज्यमानोदृश्यते। सच ऋतुमतीमेव स्त्रियं ब्रवीति। नग्निकाशब्दोह्यनागतार्तवां बालिकामाह, "नग्निकानागतार्तवा,, इत्यमरवचनात्। नग्निकाशब्देनच नञस्समासे निष्पन्नोऽयमनाग्निका शब्दआविर्भूतार्तवामेव स्त्रियमभिदध्यान्नान्यथा। तथाच सिद्धमृतुमत्या एव विवाहकरणं जैमिनेरभिमतमिति।

(२) अत्रोच्यते विपरीतमेतद्भवति। बालिकाविवाहएव जैमिनेरभिमतइत्यत्रैव प्रमाणभूतस्सन्नयमनग्निकाशब्दऋतुमतीविवाहं गमयतीति विपरीतमेतज्जल्पनं। तथाहि नग्निकाशब्दार्थं प्रथमतोविमृशा-

मः। नग्नशब्दप्रकृतिकएवायं नग्निकाशब्दः नापूर्वं शब्दान्तरं क्लृप्ते-नैवोपपत्तावपूर्वशब्दकल्पने प्रमाणाभावात् गौरवाच्च। नग्नशब्दश्च विवसनवाची लोकेप्रसिद्धः। अमरश्च "नग्नोऽवासा दिगम्बर,, इत्याह। योहि वस्त्रधारणयोग्येवयसि वर्तमानोऽपि न वस्त्रं धारयति स नग्नइत्युच्यते लोके न शिशुरनुपजातवस्त्रधारणबुद्धिरवस्त्रोऽपि। तथाविधैवच स्त्री नग्नेत्युच्यते न शैशवावस्था कन्या वसनहीनाऽपि। तत्प्रकृतिकश्चायं नग्निकाशब्दः। तत्र यइदानीं शैशवेवयसि वस्त्रधारणमेवस्वयमजानन्नवस्त्रोभवति याच तथाविधाकन्या तयोरयं नग्नशब्दो वस्त्राभावमात्रेण प्रयुज्यमानो न मुख्योभवति किन्तु नग्न सादृश्यमात्रात्तत्र नग्नशब्दः प्रयुज्यते। सादृश्यार्थकः कप्रत्ययश्च एवं सत्येव "नग्निके,,त्यत्र श्रूयमाणउपपद्यते नान्यथा। तथाच अनुपजातलज्जा गुह्याङ्गगूहनमप्यजानत्यः पांसुक्रीडापराः कन्यकाएव नग्निकाशब्दवाच्याभवितुमर्हन्ति न प्रादुर्भूतलज्जास्स्वतो वस्त्रधारिण्यः। तथाच पदपदार्थतत्वविदःपरमऋषयएव नग्निकाशब्दार्थं स्मरन्ति

"यावन्नलज्जिताऽङ्गानि कन्या पुरुषसन्निधौ।
योन्यादीन्यवगूहेत तावद्भवति नग्निका॥

यावच्चेलं न गृह्णाति यावत्क्रीडति पांसुभिः।
यावद्दोषं न जानाति तावद्भवति नग्निका,, (वसिष्ठ) इति।

एवञ्च अविज्ञातवस्त्रधारणेवयसि वर्तमाना कन्यका नग्निका पदवाच्याभवति। अवस्त्रवाचीचायं नग्निकाशब्दो नञासह समस्य मानस्स्वतोवस्त्रधारिणीमुत्पन्नलज्जां कन्यामेवाभिधातुमर्हति न प्रादुर्भूत रजस्कां नग्निकाशब्दार्थे रजःप्राप्त्यप्राप्त्योरन्तर्भावस्यैवाभावात्।

अमरसिंह्मोपि **"नग्नोऽवासा दिगम्बर,,** इति नग्नशब्दं वसनविहीनार्थकं स्वयमभिधाय तत्प्रकृतिकमपि नग्निकाशब्दं तद्विरुद्धतया **"नग्निकाऽनागतार्तवा,,** इति कथमभिदधातीति सएव प्रष्टव्यः। यद्यपि लौकिकव्यवहारेषु अमरवचनं प्रथममेव प्रमाणं न तथा वैदिकेव्यवहारे। सामान्यतएव पदपदार्थाभिधानायामरसिंह्मः प्रववृते। नासौ विशिष्य वैदिकमर्थमवबोधयति। ऋषयःपुनः स्मृति प्रणेतारः वैदिकंधर्मं तज्ज्ञानोपयोगिनः पदपदार्थविशेषांश्चाविप्लवेन परिपालयन्तस्तत्रतत्र तदुपयोगिनःपदार्थान्निरूपयन्ति। अपिच अमर सिंह्मोऽवैदिकमतस्थइति प्रसिद्धं। वैदिकधर्मोपयोगिषुच पदार्थेषु सति संशये वैदिकमूर्धन्यानामृषीणामेव वचनमुपादेयंभवति न तथा वचनान्तरंकस्यापि। प्रसिद्धंचेदं यववराहाधिकरणे पूर्वतन्त्रे। अपिच श्रुति वचनार्थसन्देहे श्रुतिवचनान्तरानुसारेण तन्निर्णयकरणमिव स्मृतिवचनार्थसंशये स्मृतिवचनान्तरानुसारेण तन्निर्णयकरणमेव न्याय्यं नान्य वचनानुसारेण। प्रसिद्धञ्चेदमानुमानिकाधिकरणे ब्रह्ममीमांसायां।

दृश्यतेचान्यत्राप्यमरसिंह्मस्य ईदृशपदार्थाभिधाने प्रमादः। वैदिकेषुकर्मसु तदुक्तपदार्थानादरश्च प्राचामस्मदीयानां यथा पुण्डरीक पदार्थे। पुण्डरीकपदंहि श्वेताम्भोजार्थकमित्यमरआह **"पुण्डरीकं सिताम्भोजमि,,**ति। पूर्वतन्त्रेतु नवमाध्याये काम्येष्टिचिदिष्टिविशेषे दर्भस्थाने वचनात्पुण्डरीकप्राप्तौ **"दर्भैस्तृणीतहरितैरि,,**ति प्रकृतितः प्राप्ते मन्त्रे दर्भपदस्थाने पुण्डरीकपदस्यऊहेसति तद्विशेषणहरित पदस्थाने रक्तपदोहइति व्यवस्थापितमाचार्येण शबरस्वामिना। तदुपपादनपराश्च प्राचीनास्तद्विरुद्धं **"पुण्डरीकं सिताम्भोजमि,,**त्यमरवचनं प्रामादिकमिति निर्धारयाञ्चक्रुः। तथा "तितउःपुमानि,,

ति तितउपदममरो नित्यपुल्लिङ्गमाह । महर्षिःपतञ्जलिस्तु "**तितउ परिपवनं भवती**,,ति तत्क्लीबं प्रयुङ्क्ते । तद्विरुद्धत्वाच्च नित्यपुल्लिङ्गत्वानुशासनममरस्य प्रामादिकं भवति । तथान्यत्रापि समासिकतादिशब्देषु नित्यबहुत्वममरेणोच्यमानं समायांसमायां विजायते "**एका च सिकता तैलदाने असमर्था**,, इत्याद्यृषिवचनविरोधात् प्रामादिकमेवेति प्रसिद्धं ग्रन्थेषु । एवं लौकिकेष्वप्यर्थेषु सत्यृषिवचनाविरोधे कोशवचनमप्रमाणमिति वदन्ति, किमुवक्तव्यं श्रौतस्मार्तादिकर्मानुष्ठानोपयोगिनि पदार्थे । तस्मादुदाहृतस्मृतिवचनविरुद्धतया न नग्निकापदार्थे कोशवचनमादरणीयतामर्हति । सर्वमेतन्मनसिकृत्यैव जैमिनिगृह्यव्याख्याता श्रीनिवासाध्वरी "**यस्मिन्वयसि स्वयमेव लज्जया वासःपरिदधाति तद्वयस्कां**,, इति अनग्निकापदार्थं व्याचचक्षे । तस्माद्विवाह्यायांवध्वामनग्निकाशब्दःप्रयुज्यमानएवतामृतोःप्राचीने वयसि वर्तमानां व्यवस्थापयति । ततश्चइदमेव जैमिनीयंगृह्यवचनमृतुमतीविवाहस्य बाधकमितिसिद्धं । यदपि समावेशनविधानान्यथाऽनुपपत्याअनग्निकाशब्देन ऋतुमत्येव ग्रहीतव्येति तदनुपदं निराकरिष्यामः । तथाच अनग्निकापदमेवानृतुमतीं विवाह्यां व्यवस्थापयतीति सिद्धम् ।

ननुयद्येवमनाग्निकाशब्दार्थोनिर्णीयते तदा नग्निकापदमविज्ञात वस्त्रधारणेवयसि वर्तमानांशिशुमेव ब्रूयात् । ततश्च नग्निकापदेनकन्यकां निर्दिश्य विवाहबोधकेशास्त्रे अत्यन्तशिशुर्द्विहायनी उतवा त्रिहायणी बालिकाऽपि विवाह्यास्यादितिप्रसज्येतेति चेत् बाढमेवं प्रसज्यतां कोऽत्र भवतो विरोधः । न ममात्र कश्चिद्विरोधः शास्त्रविरोधस्तुभवति उपनयनस्थानापन्नोहि विवाहःस्त्रीणां गर्भाष्टमएववयसि मुख्यइति तद्-

नन्तरंतु आपत्कल्पइतिच पुरस्ताद्व्यवस्थापितं । तदिदानींविरुध्यते, यदि द्वित्रवयस्काअपि शिशवो विवाह्याइत्युच्येत ।

उच्यते नायमस्ति विरोधः । यद्यप्युपनयनमुख्यकालेऽष्टम एव वयसि स्त्रीणां विवाहोमुख्योनित्यश्च । तथापि ततःप्राचीनेऽपि वयसि पुंसामुपनयनमिव स्त्रीणां विवाहोऽपि काम्यत्वेन क्वचिदुपदिश्यते शास्त्रेषु । तद्यथा **"पञ्चमे ब्रह्मवर्चसकामस्य,, "पञ्चमे नवमेवा काम्यमि"**त्यादिसूत्रैरष्टमात्प्राक्पञ्चमेऽपि वयसि यथोपनयनं स्मर्यते तथा

**"बालिका या भवेत्कन्या गुणाढ्यो यदि लभ्यते ।**
**दद्यादप्राप्तकालेऽपि देशकालभयान्नरः,,** ॥ (यम.स्मृ.)

इति स्मृतिवचनेन अष्टमवयोरूपमुख्यकालप्राप्त्यभावेऽपि कन्यकानां विवाहस्समर्थतएव । मनुरपि विशिष्टगुणवरलाभे अष्टम वयोरूपमुख्यकालमप्राप्तायाअपि कन्याया विवाहमुपदिशति यथा

**"उत्कृष्टायाभिरूपाय वराय सदृशायच ।**
**अप्राप्तामपि तां तस्मै कन्यां दद्याद्यथाविधि,,** ॥
(९-८८) इति ।

अत्र अप्राप्तामित्यस्य विवाहमुख्यकालमष्टमवयोऽप्राप्तां, किंतु ततोऽपि न्यूनवयस्कामित्यर्थः । यत्तु अत्रार्थे संशयकरणं तत् मनुस्मृतिविचारावसरे परस्तान्निराकरिष्यामः । एवं तथाविधविवाहं विधि सिद्धमभ्युपेत्यैव तस्याबालिकाया मरणे संस्कारविशेषोऽपि स्मर्यते

**"द्विवर्षात्प्राग्विवाहश्चेत् कन्यकामरणं यदि ।**
**खननं नैव कर्तव्यं मन्त्रसंस्कारमाचरेत्,,** ॥ इति ।

तस्मादविज्ञातवस्त्रधारणेवयस्यपि नग्निकापदवाच्यानां कन्यकानां कदाचिद्विवाहकरणमपि शास्त्रानुसार्यैव भवति । (२)

यदपि तृतीयं लिङ्गमुपन्यस्तं सर्वेष्वपिगृह्यसूत्रेषु विवाहे दम्पत्योर्मधुमांसादिवर्जनं ब्रह्मचर्यञ्च त्रिरात्रमवश्यमनुष्ठेयमितिविधीयते। तत्र ब्रह्मचर्यविधानं विमृश्यमानमृतुमत्याएव स्त्रिया विवाह इति प्रत्याययति। ब्रह्मचर्यंहि मैथुनासमाचरणं। तच्चेदानीं विधीयमानं व्यर्थं भवति। सतिहि कर्मणःप्रसंङ्गे तत्प्रतिषेधो युज्येत नाप्रसङ्गे। यदिच विवाह्यमानावधूरनृतुकाबालिका स्यात् तदा कःप्रसङ्गस्तस्यां मैथुनकर्मणः। अतश्च प्रतिषेधनियमविधिरेव सूचयति विवाह्यवधूर्व्यवाययोग्ये वयसि वर्ततइति। आपस्तम्बगृह्यटीकायां तात्पर्यदर्शनेऽपि "**त्रिरात्रमुभयोरधश्शय्या ब्रह्मचर्यं क्षारलवणवर्जनञ्च**,, (आप. गृ. ३—८—८) इति ब्रह्मचर्यविधौ "**अतएवात्र सूत्रे शय्यैक्याद्दुर्वारमपि मैथुनमतिप्रयत्नेन वर्जनीयमित्येवमर्थस्तन्निषेधः**,, इति तस्य प्रसक्तिरपि स्पष्टमुपपादिता दृश्यते। यदि विवाह्यमानायाश्शिशुत्वेन चतुर्थदिने शय्यैक्येऽपि व्यवायस्यासंभावितत्वं तदा दैवकृतमेव वरस्य ब्रह्मचर्यं नित्यसिद्धमिति किमनेन गृह्येषु तद्विधानेन। तस्मादनन्यथासिद्धमेतदृतुमतीविवाहसाधकंलिङ्गं भवतीति किमितोऽन्यद्गवेषणीयं। किञ्च यदि चतुर्थदिने मैथुनकरणमत्राभिमतमिति नाङ्गीक्रियते तदा त्रिरात्रब्रह्मचर्यविधिर्विफलएव स्यात्। तस्मात्त्रिरात्रब्रह्मचर्यविधानमृतुमतीविवाहलिङ्गमिति ॥

(३) अत्राभिधीयते न असिद्धेः। नावश्यं त्रिरात्रब्रह्मचर्यविधिबलाद्विवाह्यायाऋतुमतीत्वेन भवितव्यं। नापि तेन तत्सिध्यतीति शक्यं वदितुं अनपेक्षितत्वात्। ब्रह्मचर्यंहि नाम गुह्येन्द्रियस्य विकाराभावः। तथाच योगभाष्ये ब्रह्मचर्यस्य लक्षणमुच्यते "**ब्रह्मचर्यं गुह्येन्द्रियस्य उपस्थस्य संयमः**,, (योगसू—२—३०) इति।

संयमः निरोधः अचापल्यं विकाराभावइति तदर्थः। सच सत्यपि तद्धेतुभूतेस्त्रीव्यक्तिदर्शने निषेधशास्त्रंस्मरतो गम्यागम्याविवेकशालिनो धीरस्यैव पुंसो भवितुमर्हति। यस्तुपुनः कामाविष्टचित्तत्वेनाधीरबुद्धिः विधिनिषेधशास्त्राण्यप्यवज्ञातुमुत्सहते न तस्य बुद्धिर्गम्यागम्याविभागं गणयति अनिवार्यप्रसरत्वादल्पबुद्धिभिः कामावेगस्य। प्राकृतोहि कामान्धः निषेधशास्त्रमुल्लङ्घ्य अगम्यास्वपिस्त्रीषु विक्रियमाणचित्तो यथाकाममेवचेष्टितुं प्रयततइति प्रत्यक्षमेव लोकस्य। एवं स्थिते तथा स्वभावः कश्चिदप्रौढामपि स्वाधीनांपत्नीभूतामेकशय्याशायिनीं काम खेदनिवृत्तिकृतेबलात्कथञ्चिदुपभोक्तुं न यतेतेति कोहि विश्वासः। अतएव कामातुरस्याप्रौढायां कन्यकायां गमने दोषस्समर्यते हेमाद्रौ। तथाहि मार्कण्डेयः—

"असंस्कृतां पुष्पहीनां कन्यकां योद्विजाधमः।
रन्तुमिच्छति पापात्मा नरकं याति दारुणम्,, ॥ इति।

तथा देवलः—

"अप्रौढां कन्यकां विप्रोयभेत्कामातुरोऽन्वहम्।
तस्यैव नरकेवासः कानीनःस्याचदुद्भवः,, ॥ इति।

तस्यदोषस्य प्रायश्चित्तविधानमपि तत्रैव हेमाद्रौ स्फुटमुपदिश्यते। भवद्रीत्यातु अस्यकर्मणःप्रसक्तेरभावेनापुष्पवतीगमने दोष स्मरणं तस्य प्रायश्चित्तविधानंच उन्मत्तवचनमापद्येत। किञ्च न यततांवाऽसावुपभोक्तुं। तथाप्यन्ततश्चित्तविकारस्तन्मूलकतयागुह्येन्द्रिय विकारश्च तथाविधस्य पुंसः कामावेशेनावर्जनीयस्स्यादेव। तत्प्रतिषेधार्थमिदं ब्रह्मचर्यविधानमुपदिश्यतइति किमत्रानुपपन्नं।

अपिच मैथुनमष्टाङ्गकमित्युपदिशन्ति मुनयः तथाच तात्पर्य दर्शने वचनमुदाहृतं—

**"स्मरणं कीर्तनं केळिः प्रेक्षणं गुह्यभाषणम् ।**
**संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेवच ॥**
**एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः,,** ॥ इति ।

इदञ्चाष्टविधं मैथुनमायुर्वेदविदोऽप्युपदिशन्ति शरीरशास्त्रे । तथाचेदमेव स्मृतिवचनमुदाहृतं वाजीकरणप्रक्रियायां योगरत्नाकरे । एषामष्टानामेकतमस्यानुष्ठानमपि ब्रह्मचर्यविपरीतमेव भवति । अत एव योगरत्नाकरे उक्तवचनोदाहरणशेषे "**विपरीतं ब्रह्मचर्य- मेतदेवाष्टलक्षणं,,** इत्युक्तं । तथाच अयुवत्यामपि विवाह्यायामु- क्तेष्वष्टस्वन्यतमस्य प्रसङ्गः कस्यापि स्यादेवेति तन्निराकरणाय ब्रह्मचर्यविधानमावश्यकं भवति । तस्मान्नैतल्लिङ्गमृतुमतीविवाहे । नन्वेवमपि यत्रक्कापि कस्यचिदेव ईदृशस्वभावस्स्याद्वा सोऽपि न स्याद्वा न जातु सर्वस्य स्यात् । तत्र किमर्थोऽयं ब्रह्मचर्यविधिः । मैवं । शास्त्रं हिनाम किंचिन्न सर्वविषयेऽपि चारितार्थ्यमपेक्षते नवा तथा संभवति विशेषतश्च निषेधशास्त्रं । तद्धि यत्रक्कापि यदाकदाऽपि संभाव्यमानेऽपि पुरुषविशेषे लब्धावकाशं सप्रयोजनमेव भवति । नहि परहिंसापरस्वापहरणमातृस्वसृगमनादिनिषेधविषयश्शास्त्रोपदिष्टा स्सर्वेषु पुरुषेष्वावश्यका भवन्ति । दृश्यन्तेहि स्वतस्सिद्धविवेकबला देव ईदृशंकार्यं मनसाऽप्यस्मरन्तः पुरुषधौरेयाःकेचित् । नह्येतावता तन्निषेधविधयः कैमर्थ्यशङ्काविषयाः फलहीनावाभवन्ति, संभाव्यमाने तद्योग्यपुरुषविशेषे चारितार्थ्यसंभवात् । किंहिनाम नसंभाव्यते प्राकृते षु जनेषु विशेषतश्च कामातुरेषु । तस्मादप्रौढायामपि विवाह्यायामय मतिप्रसङ्गः क्कापि कामिषु प्रसजन्नेवानेन ब्रह्मचर्योपदेशेन निराक्रि- यते नपुनरेतन्निषेधफलवत्तायै तस्याःप्रौढात्वकल्पनमावश्यकं भवति ॥

अपिच निषेधशास्त्रं कृत्स्नमप्येवंविधमेव प्रायेण भवति। यत्रवस्तुनि यत्कार्यं निषिध्यते तत्रवस्तुनि तन्निषेधोपदेशबलादेव अवश्यं तत्कार्ययोग्यतया भवितव्यमितिकल्पनं सर्वथा नोपपद्यते। "न सुरां पिबेदि,, तिहि सुराद्रव्ये पानक्रिया प्रतिषिध्यते। न ह्यस्मादेव पानप्रतिषेधोपदेशबलात्सुराद्रव्ये पानयोग्यतयाऽप्यवश्यं भवितव्यमिति कस्यचिदभ्यूहस्साधुर्भवति। अशक्यस्यहि कर्मणो निषेधोपदेशो न युज्यते न पुनरयोग्यस्य। नचैतदशक्यंकर्म कस्यचिदप्रौढाव्यवायोनाम। अयोग्यमेवच सर्वत्र निषेधार्हं भवति न योग्यं। साच योग्यता दृष्टा अदृष्टावेत्यन्यदेतत्। तस्मान्मूढजल्पितमेतत् यद्बुह्येन्द्रियविकारप्रतिषेधरूपं ब्रह्मचर्योपदेशमवलम्ब्य विवाह्याया व्यवाययोग्यतया भवितव्यमिति कल्पनमितिसिद्धम्।

यदपि दिनत्रयं ब्रह्मचर्यविधानमेव चतुर्थदिने व्यवायंकर्तव्यं प्रत्याययति अन्यथा विधिवैयर्थ्यात् न तत्र वचनान्तरमपेक्षणीयमिति तदिदमशास्त्रज्ञजल्पितं। न ह्ययमेको विधिर्दिनत्रयब्रह्मचर्यं तुरीय दिने व्यवायकर्मचेत्यर्थद्वयमवबोधयितुमर्हति वाक्यभेदापत्तेः। सकृत्प्रयुक्तंहि वाक्यं सकृदेवार्थं प्रत्याययति नार्थान्तरं प्रमाणाभावात्। अर्थान्तरेऽपि वृत्यभ्युपगमेऽनिष्टापातश्च। "दीक्षितो नानृतं वदेदि,, ति क्रतुदीक्षासमये अनृतवचनप्रतिषेधश्चोद्यते। नह्यस्य प्रतिषेधोपदेशस्य दीक्षानिवृत्युत्तरक्षणमवश्यमनृतवचनं कर्तव्यं अन्यथा प्रतिषेधविधिरेवायं विफलस्स्यादिति अभिप्रायकल्पनममूढःकश्चिदङ्गीकुर्यात्। एवमिहापि त्रिरात्रब्रह्मचर्यविधेस्तुरीयदिनेव्यवायकरणे तात्पर्यकल्पनं न प्रामाणिकजनैरादरणीयं भवति। तत्रानृतवचनप्रतिषेधेह्ययमभिप्रायः क्रतुरवश्यानुष्ठेयइति विधिबलादवैकल्येन

क्रतुपरिपूर्त्तये क्रियमाणं मध्येकिञ्चिदनृतवचनमपि न दोषाय स्यादितिमन्यमानस्यउत्तानदृष्टेर्जातु मिथ्यावचनप्रसङ्गस्स्यात् स माभूदितिस प्रतिषेधआरभ्यते । नतु अवभृथोत्तरक्षणे अनृतवचनमावश्यकमिति । एवमिहापि त्रिरात्रमेकशय्याविधिबलमाश्रित्य यथासंभवंमध्येकिञ्चिदाश्लेषादिकं क्रियमाणमपि नदोषाय स्यात् । अन्यथा किमर्थमेकशय्याविधानमिति दुरूहेण दुर्विदग्धप्रकृतिः किमपिचेष्टितुमारभेत । सा चेष्टा माभूदित्येव ब्रह्मचर्यविधिरुपदिश्यते नतु चतुर्थदिनेव्यवायकरणमावश्यकमितिकृत्वेत्यभिप्रायवर्णनमेव युक्तं नान्यथा । "**शय्यैक्याद्दुर्वारमपि मैथुनं वर्जनीयमि**,,ति वदतस्तात्पर्यदर्शनकृतोऽप्ययमेवाभिप्रायः । यत्पुनःप्रत्यक्षमेव चतुर्थदिने व्यवायविधानंगृह्यसूत्रेष्वस्तीति तद्भ्रममात्रमितिअनुपदं निरूपयिष्यामः । यस्तुपुनस्त्रिरात्रंब्रह्मचर्यमितिवचनस्य चतुर्थदिने ग्राम्यधर्मकरणेअभिप्रायइतिकल्पयति सहिपण्डितएवमपि कल्पयेत् त्रिरात्रमितिरात्रिपदप्रयोगबलाद्रात्रिमात्रएवेदं ब्रह्मचर्यंभवति अहनि तु तेष्वपि दिनेषु व्यवायकरणमावश्यकमेव अन्यथाहि त्रिरात्रमितिवचनं व्यर्थमेव स्यादिति । तस्मादसंगतैषा कल्पना ।

ननु श्रोत्रियानूचानादिपुत्रगुणफलकामनाभेदेन ब्रह्मचर्योपदेशेकालतारतम्यमप्युपदिश्यते । तच्च ब्रह्मचर्यसमाप्त्युत्तरं सन्ततिरूपतत्फलसिद्धये तद्द्वारतयादृष्टंव्यवायकर्माक्षिपतीतिचेत् नैतत्साधु । यत्फलकामनोपबन्धेन यत्कर्म विधीयते तद्धिकर्म तत्फलसाधकं भवेदितियुक्तंकल्पनं यथा स्वर्गादिकामस्य ज्योतिष्टोमादिविधाने । तत्र साध्यसाधनभूतयोर्यदि दृष्टंद्वारं किञ्चिन्नोपलभ्यते तदा श्रूयमाणसाध्यसाधनभावनिर्वाहाय अदृष्टमेव किमपिद्वारं कल्पनीयं । तच्चादृष्टमविनश्वरंसत् काला

न्तरभाविनि फले स्वयमुपकरोति । तथाच स्मर्यते "कदाचित्सुकृतं कर्म कूटस्थमिवतिष्ठती,,ति । इहच गुणविशेषशालिपुत्रोत्पत्तिकामस्य विधीयमानेषु ब्रह्मचर्यविशेषेषु न दृष्टंकिञ्चिद्द्वारमुत्प्रेक्षितुमपि शक्यते । ततश्च अदृष्टमेव तत्र द्वारंकल्पयितव्यं यथा पाणिग्रहणभेदोपदेश विधौ । वध्वाः पाणिग्रहणेहि दुहितृमात्रजननफलकामनायामङ्गुलि मात्रग्रहणमिति पुत्रमात्रजननफलकामनायाञ्च वराङ्गुष्ठलोम्नामुपरि भावोयथाभवति तथाग्रहणमिति विशेषविधिरुपदिश्यते । तथाच सूत्रं "यदिकामयेत स्त्रीरेव जनयेयमिति अङ्गुलीरेव गृह्णीयात्,, (आप. गृ. २—४—१२) इति "यदि कामयेत पुंसएव जनयेयमिति अङ्गुष्ठमेव साभीवांगुष्ठमभीवलोमानि गृह्णाति,, इतिच। नह्यत्र एवंविधपाणिग्रहणभेदस्य दुहितृजननं पुत्रजननंवा फलं प्रत्यदृष्टं द्वारमन्तरेण दृष्टं किमपि शक्यं कल्पयितुं । न चैतद्विधिबलात्पाणिग्रहणोत्तरक्षणमेव सन्तानसिद्धये व्यवायकर्म कर्तव्यमिति कल्पनं शास्त्रीयंभवति ।

अपिच सन्तानविशेषफलोद्देशेन ब्रह्मचर्यनियमविशेषोपदेशश्शास्त्रेषु द्विप्रकारश्श्रूयते । विवाहकर्माङ्गभूतमेकं ब्रह्मचर्यं सर्वेषुगृह्यसूत्रेषु प्रसिद्धं, रजःप्रादुर्भावोत्तरकालं क्षीरौदनाशनाद्यङ्गकलापोपेतं स्वतन्त्रं ब्रह्मचर्यमपरं बृहदारण्यकाष्टमाध्यायादौ विधीयमानं प्रसिद्धं । तत्र विवाहाङ्गभूतं प्रथमब्रह्मचर्यं बालिकयावध्वासह केवलमदृष्टार्थं विधीयतइति न तत्रव्यवायकर्मणः प्रसङ्गोऽप्यस्ति । द्वितीयन्तु ब्रह्मचर्यमदृष्टोत्पत्तिद्वारा समनन्तरक्रियमाणे गर्भाधानार्थे व्यवायकर्मण्युपकारकं भवति । बोधायनोऽपीदमुभयविधं व्रतानुष्ठानमुपदिशति स्वगृह्ये । तत्र विवाहाङ्गतया त्रिरात्रव्रतविधिः प्रसिद्धः । तमेवव्रतविधि-

मृतूत्तरकालमप्यनुष्ठेयमुपदिशति सएव । तद्यथा "यस्य पत्नी गृहऋतु-मती भवति तस्यैतद्व्रतं यथा विवाहे त्रिरात्रं (बो. गृ. ९–११)इति । एवमुभयोरपि ब्रह्मचर्यविध्योर्विविक्तःपन्थाः । एवंविधं ब्रह्मचर्यविध्यु-पदेशप्रकारभेदमविजानन्तः किलासंप्रदायविदःकेचिदत्र मोमुह्यन्ते । आचार्यकुलाद्गृहीतशास्त्रार्थानां पण्डितानान्तु नात्रविषये संशयावकाशो ऽप्यस्ति । तस्मान्न ब्रह्मचर्यविधिमाश्रित्य गृह्येषु विवाह्यायाऋतुमती-त्वं सिद्ध्यतीतिशक्यं कल्पयितुं ।

नन्वेवमपि वरमात्रस्य ब्रह्मचर्यविधानमेव इहावश्यकं भवति न वध्वाअपि । ततश्च "उभयोरि,,ति ग्रहणंऽयर्थं भवति । विवाह्याहि वधूर्बालिकेति पक्षे सा ब्रह्मचर्यतदभावकथामेवहि न विजानाति । तत्र किमर्थमुभयोर्ब्रह्मचर्यं गृह्यसूत्रकारा विदधति । नायंदोषः कादाचित्क संभवाभिप्रायकत्वादुभयग्रहणस्य । आपत्कल्पतयाहि कदाचिद्द्वादश-वयस्कायाअपि स्त्रिया विवाहकरणमभ्यनुज्ञायते शास्त्रेषु । तथाविधे च विवाहे कदाचिद्वध्वाअपि आलिङ्गनाद्यभिलाषाभासस्संभाव्येत । आर्तवाविर्भावात्परमेव स्त्रीणां तथाविधोऽभिलाषइतितु नायं नियमोऽस्ति स्वभाववैचित्र्यात् । तदभिप्रायकश्चेदं ब्रह्मचर्यविधावुभयग्रहणमिति न विरोधोऽस्ति । अपिचार्थान्तरार्थमुभयग्रहणमिहक्रियते न ब्रह्मचर्यमात्रा-र्थं । इहहि ब्रह्मचर्यमिव क्षारलवणवर्जनरूपमर्थान्तरमप्यनुष्ठेयत्वेन उप-दिश्यते न ब्रह्मचर्यमात्रं । तत्रावश्यमुभयग्रहणं कर्तव्यंभवति वध्वा अपि तद्यथास्यादित्येवमर्थं । अतश्चान्यार्थं क्रियमाणस्य उभयग्रहण स्य ब्रह्मचर्यमात्रार्थत्वकल्पनमेव तावदसिद्धं । तत्सामर्थ्याद्वध्वाऽपि भोगाभिलाषिण्या भवितव्यमितिकल्पनन्तु सुतरामसंभावितमेव । अपि च उभयग्रहणस्य ब्रह्मचर्यमात्रार्थत्वनिर्बन्धेऽपि नास्यकुकल्पनस्या

वकाशोभवति। ब्रह्मचर्यपदंहि न व्यवायवर्जनमात्रार्थकं किन्तु मधु-मांसदन्तधावनाञ्जनाभ्यञ्जनानुलेपनस्रग्धारणसप्तकवर्जनार्थकमपि भवति। तथाच आपस्तम्बगृह्यतात्पर्यदर्शनं **"यद्वा ब्रह्मचर्यपदेनैव मध्वादिसप्तकमपि निषेध्यं,,** इति। तथाच वध्वाअपि मध्वादि सप्तकवर्जननियमसिद्ध्यर्थमुभयग्रहणं ब्रह्मचर्यार्थमप्यावश्यकमिति क भवदीयकुकल्पनावकाशः। वस्तुतस्तु ऋतुमतीविवाहवादएव उभय ग्रहणस्य वैयर्थ्यं दुष्परिहरं भवति। दम्पत्योरेकतरस्य ब्रह्मचर्य नियमानुष्ठानबलेनैवान्यस्यापिहि तन्नियमनमर्थात्सिद्धं भवति। तत्रैवं सिद्धे सति एकतरस्य ब्रह्मचर्यविधानमात्रेण उभयब्रह्मचर्यमसिद्धमिव कृत्वा प्रत्येकं तद्विधानार्थेन किमुभयग्रहणेन। अतश्च उभयग्रहण सार्थक्यसम्पादनायान्यतरस्य ब्रह्मचर्यनियमेऽप्यन्यस्य तदसिद्धिःक्वापि व्यभिचारप्रसङ्गमवलम्ब्यैव तव कल्पयितव्यास्यात्। इत्थंच ब्रह्मचर्य विधानं यथा वध्वाऋतुमतीत्वे प्रमाणं भवति तथा तत्रोभयग्रहणं व्यभि-चारकरणे प्रमाणमिति तदपि गृह्यशास्त्रसिद्धस्सूक्ष्मधर्मइति तव सिध्येत्। हन्तैवमसम्प्रदायविद्भिर्बालिशैस्सच्छास्त्राणामपार्थकरणेन सर्वोलोकआ-कुलीक्रियते। तस्माद्गृह्यसूत्रेषु त्रिरात्रब्रह्मचर्यविधानं विवाह्यायाऋतु-त्वे लिङ्गमित्यसत्प्रलपितमेतत्॥ (३)

यदपि प्रत्यक्षमेव समावेशनशब्देन विवाहचतुर्थदिने व्यवाय विधानं गृह्येष्वप्रकम्प्यमृतुमतीविवाहस्य मूर्धाभिषिक्तं चतुर्थं लिङ्गमि-त्युपन्यस्तं। तद्विचारयामः। चतुर्थदिने समावेशनविधिरेव तावद्बहुषु गृह्येषुनास्ति गन्धर्वोद्वासनानन्तरंशेषहोमविधिमात्रेण प्रायेणविवाहविष-ये गृह्यसूत्राणां परिसमाप्तेः। आपस्तम्बबोधायनहिरण्यकेशाः प्रायेणैक च्छायापन्नानेव प्रयोगविधीन्सूत्रयमाणास्स्वगृह्येषु स्फुटं समावेशनं

चतुर्थदिने सूत्रयन्तीति यदुच्यते तदप्यसिद्धं आपस्तम्बेन समावेशन स्यासूत्रितत्वात् । नह्यापस्तम्बश्चतुर्थदिने समावेशनं कर्तव्यमिति क्वापि सूत्रे विदधाति । यथाहि बोधायनः "**अथैनामुपसंवेशयाति प्रजापतिस्त्रियां यशइत्येतया,,** (बोधा. गृ. १—६—१०) इति सूत्रेण गन्धर्वस्यविश्वावसोरुद्वासनानन्तरं वध्वाउपसंवेशनं वरेणकर्तव्यं विदधाति नैवमापस्तम्बो विधत्ते । सहि गन्धर्वोत्थापनानन्तरं होम विशेषंविधाय हुतशिष्टाज्यबिन्दोर्वधूशरसि प्रक्षेपं वधूवरयोःपरस्परेक्षणं आज्यशेषेणहृदयसंसर्गं "**प्रजापते तन्वं मे,,** इत्यादिमन्त्रत्रय जपंच विधाय मन्त्रपाठे उक्तमन्त्रत्रयानन्तरमवशिष्टस्य मन्त्रभागस्य समावेशनकाले जपमात्रं विदधे "**शेषं समावेशने जपेत्,,** (आप· गृ. ३—८ – १०) इति । अत्र सूत्रे समावेशनानुवादेनावशिष्ट मन्त्रस्य जपमात्रं विधीयते नतु समावेशनमपि विधेयकोटिप्रविष्टं । सचायमवशिष्टमन्त्रजपः पूर्वोक्तमन्त्रत्रयजपोत्तरकालिकइति "**तिस्रो जपित्वा शेषं समावेशन,,** इति क्त्वाप्रत्ययनिर्देशेन क्रमोऽपि तद्विधेयकोटौ संबध्यते । तथाच क्रमजपयोरेवात्रसूत्रे विधानमिति स्वरसतः प्रतीयते । समावेशनन्तु कःपदार्थः सच कथमनुष्ठेयः किं स्वतन्त्रंकर्म उत कस्यचिदङ्गमित्यत्र न किंचिन्निर्णायकमत्रउपलभ्यते । समावेशन स्वरूपाज्ञानेच तदुपबन्धेन विधीयमानयोः क्रमजपयोरनुष्ठानमशक्य मेव स्यात् । ततश्च पूर्वोत्तरसूत्रसन्दर्भपर्यालोचनेन समावेशनन्नाम किंरूपं कर्मेतिनिर्धारणीयं । यद्येवं स्वगृह्यस्थपूर्वपरसूत्रपरामर्शेन तत्स्वरूपं निर्धारयितुं न शक्यते तदा प्रकृतजपविधिवैय्यर्थ्याभावाय कथञ्चिद्गृह्यान्तरार्थोपसंहारेणापिवा तन्निर्णेतव्यं । यद्यपीतःपूर्वसन्दर्भे क्वापि समावेशनस्वरूपनिर्णायकं सूत्रं नोपलभ्यते । तथाऽपि परस्ता-

त्समनन्तरतृतीयसूत्रे **"रजःप्रादुर्भावात्स्नातामृतुसमावेशनउत्तराभिरभिमन्त्रयेत,,** (आप. गृ. —३—८—१३)इत्यत्र ऋतुसमावेशनइति श्रूयते। तदेवच समावेशनमत्राप्यभिप्रेतं स्यादिति वक्तव्यं शब्दैक्येन प्रत्यभिज्ञायमानत्वात् अन्यस्यच समावेशनस्याश्रवणात् जिज्ञासितत्वाच्च समावेशनपदार्थस्य। एवंचसति यदनुपदमृतुसमावेशनमभिधास्यते तस्मिन्क्रियमाणे अवशिष्टमन्त्रं जपेदिति प्रकृतसूत्रार्थःपर्यवस्यति। वक्ष्यमाणंच समावेशनं वध्वासह व्यवायार्थमेकत्र मेळनमेव विवक्षितं। यद्यपि समावेशपदमनेकेषामेकत्रमेळनमात्रे प्रसिद्धं नतु विशिष्य स्त्रीपुंसयोर्मेळने नतरांच व्यवायकर्मणि। तथाऽपि तत्र **"ऋतुसमावेशन,,** इति ऋतुपदसमभिव्याहाराल्लिङ्गादयमर्थविशेषो लभ्यते। ऋतुशब्दोहि स्त्रीणां गर्भग्रहणेऽर्थे प्रसिद्धः। ऋतवे गर्भग्रहणाय यत्समावेशनं तदृतुसमावेशनं। तथाच गर्भोत्पादनार्थं स्त्रीपुंसयोर्यदेकत्रमेळनं तदृतुसमावेशनपदेनाभिधीयते। तच्च समावेशनं व्यवायकर्मपर्यवसाय्येव ऋतूपयोगि भवति नान्यथेतिसामर्थ्याद्व्यवायार्थकं पर्यवस्यति। तथाच यदाऋतुसमावेशनं करिष्यते तदाअनुवाकशेषं जपेदित्यर्थः। नन्विदानीं विवाहचतुर्थदिने किमपि समावेशनन्नामकर्तव्यं भवति तस्यापस्तम्बगृह्ये क्वाप्यश्रूयमाणत्वात्। न चात्रैव सूत्रे समावेशनमपि विधेयंस्यादिति शङ्क्यं। तद्धि समावेशनमिह विधीयमानस्यानुवाकशेषजपस्य निमित्तत्वेनानूद्यते नत्वस्य विधेयतागमकं किञ्चिल्लिङ्गमस्ति। अन्यतःप्राप्तत्वाच्च तत्र विधिकल्पनमपि न संभवति। तस्माद्वक्ष्यमाणमृतुसमावेशनमेव इह समावेशनपदेनानूद्य मन्त्रजपमात्रं विधीयतइति स्थितिः। तदेतत्सर्वमभिप्रेत्य सुदर्शनाचार्यो व्याचष्टे "शेषं अनुवाकशेषं **"आरोहोरुमि,,**

त्यादिकं समावेशने समावेशनकाले जपेत् समावेशनञ्च वध्वासह मैथुनार्थं शयनं "ऋतुसमावेशने,, "इत्यृतुलिङ्गात्,, इति। अत्र समावेशनपदस्य व्यवयार्थं सहशयनमित्यर्थमभिधाय तत्र वक्ष्यमाणं "ऋतुसमावेशन,, इत्यत्रऋतुपदग्रहणं लिङ्गं प्रदर्शयन्सुदर्शनाचार्यः ऋतुसमावेशनमेव इह "समावेशन,, इत्यनूद्यते नेदं समावेशनान्तर मिति स्पष्टं विवृणोति। अन्यथा वक्ष्यमाणसूत्रेऋतुलिङ्गसद्भावं प्रमाण माश्रित्य व्यवायार्थं सहशयनमेव समावेशनमित्यर्थसिद्धावपि इहसूत्रे समावेशनपदं तदर्थकमित्येतदप्रामाणिकं स्यात्। नह्यत्र ऋतुग्रहण मस्ति। नच समावेशनपदमेव तदर्थकमितिभ्रमितव्यं प्रमाणाभावात् "ऋतुसमावेशन,, इत्युत्तरसूत्रेऽपि समावेशनपदमात्रेण तदर्थसिद्धौ ऋतुग्रहणवैयर्थ्यापत्तिः। सुदर्शनाचार्योऽपि ऋतुग्रहणंलिङ्गमाश्रित्यैक समावेशनपदस्य व्यवायार्थकशयने पर्यवसानं समर्थयति। समा- वेशनपदस्यैव तदर्थरूढत्वे तु लिङ्गान्वेषणमनावश्यकं स्यात्। नहि श्रुतिरूपं प्रमाणं स्वार्थसमर्पणायलिङ्गं सहायमपेक्षते। लिङ्गंहि श्रुति सापेक्षमितिप्रसिद्धं प्रमाणविदां। तथाच भाविसूत्रस्थमृतुग्रहणमेतत्सूत्र स्थसमावेशनपदार्थनिर्णयाय लिङ्गंप्रदर्शयन् तत्रत्यमेव समावेशनमत्रा- नूद्यते नान्यदिति सुदर्शनाचार्यस्सुष्ठु व्याचष्ट। तस्मादृतुसमावेशनानु- वादेनात्रविधीयमानोऽनुवाकशेषजपो यदा ऋतुसमावेशनं करिष्यते तदा कर्तव्यइत्येतदेवापस्तम्बस्य भगवतो मतं। नत्वनुवाकशेषजपार्थं मन्त्रापूर्वं किञ्चित्समावेशनं कर्तव्यं भवति अविधानात् अन्यतःप्राप्तस- मावेशनानुवादेन विहितत्वाच्चेति सिद्धम्।

नन्वेवंसति अन्यार्थप्रयुक्तमेव ऋतुसमावेशनमाश्रित्यायं मन्त्र जपो विधीयतइत्यायाति। एवमभ्युपगमे तस्य दैवादुपघाताल्लोपेसति

अयमनुवाकशेषजपोऽप्याश्रयलोपाल्लुप्येत । विवाहकर्मार्थस्यमन्त्रजप-स्य कर्मान्तरप्रयुक्तसमावेशनाश्रयेण कर्तव्यत्वाभिधानमपि नोपपद्येतेतिचेत् । अत्रोच्यते । यदिदैवादुपघातादृतुसमावेशनमेव क्वचिन्नसंभविष्यति तदा काममाश्रयलोपादयं मन्त्रजपोऽपि लुप्यतां । कोऽत्र विरोधः। इष्टमेवैतत्। अन्यार्थप्रयुक्तवस्त्वाश्रितस्याहि कर्मणस्तत्प्रयोजकलोपादाश्रयलोपे लोपश्शास्त्रसिद्धएव । भोजनार्थप्रयुक्तान्नाश्रयेणाहि विहितं प्राणाग्निहोत्रमुपवासादिना निमित्तेन भोजनलोपे लुप्यतएव नतु स्वानुष्ठानसिद्धये किमपि द्रव्यान्तरं कल्पयति । तथा व्यवायार्थं सहशयनाश्रयेण विधीयमानोऽयं मन्त्रजपो यदिदैवादुपघातादाश्रयभूतं तच्छयनं लुप्यते तदा लुप्यतएव नपुनरेतन्मन्त्रजपार्थतया किमपि समावेशनान्तरं कल्पयितुं शक्यं । प्रसिद्धश्चेदं प्राणाग्निहोत्राधिकरणे "आदरादलोपः,, (ब्रह्मसू. ३—३——४०) इत्यत्र ब्रह्ममीमांसायां । यथाच भोजनापरपर्यायंव्रतमाश्रित्य "**पयोव्रतोब्राह्मण,,** इत्यादिना पयआदिद्रव्यविधाने सत्येवभोजनप्रसङ्गे अन्नमपहाय पयो द्रव्यमुपादेयं भवति । नपुनरसत्यामपि भोजनाकाङ्क्षायां पयोविधि बलादेव भुजिक्रियाऽपि शक्या कल्पयितुं तत्रभोजनलोपे पयोलोपस्यापि इष्टत्वात् । तथाचात्रैव एतन्निदर्शनप्रदर्शनपूर्वकं सुदर्शनाचार्यआह "**यथाच भोजनपर्यायव्रताश्रितं पयआदिविधानं तथा रागप्राप्तसमावेशनाश्रितं विवाहकर्मार्थं क्रमजपयोर्विधानमि,,** ति अतएव कर्मान्तरप्रयुक्तसमावेशनाश्रयेण कथं विवाहाङ्गजपविधिरिति शङ्कापि नसंभवति । अन्यार्थप्रयुक्तंहि किञ्चिदाश्रित्य अङ्गभूतास्स्वतन्त्राश्चभूयांसोविधयो विधीयमाना दृश्यन्ते । तद्यथा प्रायत्यार्थं क्रियमाणमेव आचमनमाश्रित्य तदीयास्वप्सु प्राणोपासनाङ्गतया

प्राणवासस्त्वबुद्धिर्विधीयते। तथा कर्माङ्गोद्गीथाद्याश्रयेण स्वतन्त्राणिच भूयांस्युपासनानि विधीयन्ते। तस्मादन्यार्थं समावेशनमाश्रित्य कथं विवाहाङ्गविधिरिति शङ्कायाअपि नावकाशइतिसिद्धं।

नन्वेवमपि कालान्तरभाविनि ऋतुसमावेशने करिष्यमाणस्य मन्त्रजपस्य कथमिदानीन्तनविवाहकर्माङ्गता। कंपुनरत्रविरोधं पश्यसि। नहि भिन्नकालिकयोःकर्मणोरङ्गाङ्गिभावे कश्चिदस्ति विरोधः। नहि परेऽहनि प्रातरनुष्ठीयमानं तिलतर्पणं पूर्वदिनकृतश्राद्धाङ्गं नभवति। तथा वसन्तकालानुष्ठितोऽपि बृहस्पतिसवो वाजपेयस्य शरत्काले प्रागनुष्ठितस्याङ्गं भवति "**वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते**,, तिवचनबलात्। तथा अन्तकाले कर्तव्यस्य "**अक्षितमसी**,, त्यादिमन्त्रत्रयजपस्य पूर्वानुष्ठितोपासनाङ्गत्वं संप्रतिपन्नं। सतिहि प्रमाणे विप्रकृष्टकालभाविनोऽपि कर्मणोङ्गत्वे विरोधगन्धोऽपि नास्ति। तस्मादुत्तरकालिके समावेशने करिष्यमाणोऽपि मन्त्रशेषजपो विवाहकर्माङ्गं भवतीति युक्तमेवैतत्। अतएव सुदर्शनार्योऽपि "**विवाहकर्मार्थं क्रमजपयोर्विधानमि**,,ति वचनेन भाविनोऽपि जपस्य विवाहाङ्गत्वं स्पष्टमाह। तस्मादापस्तम्बगृह्यपूर्वापरपर्यालोचनायां विवाहचतुर्थदिने दम्पत्योस्समावेशनविधिरेव नास्ति। किन्तु ऋतुसमावेशनकालएवावशिष्टानुवाकजपकरणमित्येषएव सिद्धान्तः। आचारश्च धर्मज्ञानाममुमेव सिद्धान्तमुपोद्बलयति। एवंचसति यद्विवाहचतुर्थदिने केषांचित् "**आरोहोरुमि**,,त्यादिमन्त्रजपकरणं तदापस्तम्बमतानुसार्येव नभवतीतिसिद्धं।

यत्तुकेचित् विवाहकर्माङ्गभूतस्य "**आरोहोरुमि**,, त्यादिजपस्य सिद्धये चतुर्थदिनएवसमावेशनमापस्तम्बिनामपि नियतमितिमन्य-

न्ते तत्सूत्राननुसारित्वात् टीकाऽननुसारित्वाच्च न शिष्टैरुपादेयं भवति। तथाहि यदि ऋतुसमावेशनात्पृथगिह चतुर्थदिने किमपि समावेशनान्तरं विवक्षितमाचार्यस्यामविष्यत् तदा हुताशिष्टाज्यबिन्दुप्रयोगएव जपकर्मण्यपि व्यक्तमेव समावेशनमपि व्यधास्यत् । यथाहि अत्रैव सूत्रे हुताशिष्टाज्यबिन्दुप्रक्षेपविध्यङ्गतया "अपरेणाग्निं प्राचीमुपवेश्यतस्याशिरसि,, इति प्रथममुपवेशनं विधायानन्तरमाज्यबिन्दुनिनयनं विदधाति एवमिहापि जपकर्मणि "तिस्रो जपित्वा वधूं समावेश्य,, इति मुक्तकण्ठमेव किमिति समावेशनं न व्यधास्यत् नच तथा विधत्ते । तस्मादत्रापूर्वं समावेशनमापस्तम्बस्यानभिमतमित्येव निश्चीयते । टीकाकारश्च सुदर्शनोऽपि वक्ष्यमाणमेव ऋतुसमावेशनमिहत्यसमावेशनपदार्थतया विवक्षितमिति विवृणोति । न त्वपूर्वं समावेशनमभिप्रेतमिति व्याचष्टे । तद्व्याख्यानवचनंचनिरूपितमिदानीमेव नच बोधायनेन चतुर्थदिने समावेशनं विहितमिति इह तदनुवादेन मन्त्रजपमात्रं विधीयतइति युक्तं कल्पनं, अदर्शनात् । नखलु गृह्यान्तरोक्तस्यार्थस्य गृह्यान्तरेऽनुवादः क्वापि दृश्यते । आतश्चेदमयुक्तं भवति गृह्यसूत्राणिहि परस्परनैरपेक्ष्येण तत्तन्मात्रविषयतया प्रवृत्तानि सर्वाण्यपि विशेषशास्त्राणि भवन्ति नतेष्वन्यत्रोक्तस्यार्थस्यान्यत्रानुवादस्संभवति । विरुद्धंच गृह्यसूत्राणां विभिन्नानां सतामन्योन्यार्थोपसंहारेण एकार्थत्वकल्पनं । अपिच बोधायनः "उपसंवेशयति,, इत्याह इहच समावेशनइत्युच्यते । ततश्च शब्दभेदेन प्रत्यभिज्ञानाभावादप्यस्य तदनुवादत्वकल्पनं नघटते । तस्मान्नात्र गृह्यान्तरोक्तस्य समावेशनस्य परिग्रहोयुज्यते । अतएव अत्रसूत्रे "केचिदसत्यपिरागे कर्मार्थमस्मिन्क्रमे समावेशनं नियतमेवेति,, इतिवचनेन पृथक्समावेशनवादं केचिन्मतत्वेना

नुवदति टीकाकारः । एवं पूर्वपक्षिभिरभिधीयमानमपीदं समावेशनं न रागप्राप्तं विवाहायावध्वा बालिकात्वेन रागहेतोर्दृष्टार्थस्य व्यवायकर्मणस्तत्रासंभवात् । अतएव असत्यपि रागे इति पूर्वपक्षिणएव वदन्ति एतेन चतुर्थदिनसमावेशनमपि व्यवायार्थमित्यधुनातनानां भ्रान्तिः परास्ता । व्यवायाभ्युपगमेरागावश्यंभावेनारागप्राप्तमिदं समावेशनमिति कथनं हि तदा नसंगच्छेत । विधिनियमितोपिहि व्यवायो न स्त्रीपुंस्यो रागमनुपजीव्य आत्मानं लभते । व्यवायोपि क्रियते रागोपि नभवतीति तु विप्रतिषिद्धं वाङ्मात्रमेवस्यात् । समावेशनशब्दश्चाप्रामाणिके व्यवायार्थे कल्पयितव्यइति अपरमिहान्याय्यं । तस्मादेकदेश्युक्तमपि समावेशनमिदं मन्त्रजपमात्रार्थमदृष्टफलकं केवलं वध्वासह शयनमात्रमेव न त्विह व्यवायस्य गन्धोऽप्यस्ति । अत्रचपक्षे ऋतूत्तरकालं क्रियमाणे अतएव दृष्टार्थतया रागप्राप्ते समावेशने नायं मन्त्रजपो भवतीति ते मन्यन्ते । परन्तु मूलटीकाऽननुसारित्वात् न्यायविरुद्धत्वाच्च नायं पक्षश्शिष्टपरिग्राह्योभवति । अपिच विहितेऽपीह पृथक्समावेशने भवदभिमतो व्यवायार्थइह प्रतिपादयितु न शक्यते किमङ्ग वक्तव्यमसति तद्विधाने । नहि समावेशनं व्यवायइत्यत्र प्रमाणमस्ति अनुशासनाभावात् अव्युत्पन्नजल्पितत्वाच्च तदर्थस्य । यदि समावेशनविधौ व्यवायोऽभिप्रायिष्यत तदा किमिति मुक्तकण्ठमृषयो व्यवायमेव साक्षान्न व्यधास्यन् । नच नागरिकाऋषयो व्यवायपदप्रयोगमनागरिकं मन्यमानास्समावेशनपदेन तमर्थं सूचयन्तीति भवतःकल्पना घटते । नहि गृह्यसूत्राणिनाम काव्यानि भवन्ति । काव्येषु हि नागरिकानागरिकविमर्शो भवति न कर्मचोदनासु । कर्मचोदनासुहि विधिप्रतिषेध-

रूपासु निन्द्यस्यानिन्द्यस्यवा विवक्षितस्यार्थस्य साक्षाद्बोधनमेव न्याय्यं भवति। नात्र नागरिककथायाः प्रसङ्गोऽस्ति। किञ्च दृष्टविषयेष्वेव नागरिकादिविभागो नादृष्टविषयेषु। अदृष्टप्रधानानिच धर्मशास्त्राणि। अपिचात्यन्तजुगुप्सितं भवादृशां वक्तुमपि लज्जाकरं योनिविवृणनादिकं निस्संकोचेन सूत्रयमाणाअपि ऋषयोऽत्र परमपूर्वं नागरिकभावमावहन्तीति इयं वाचोयुक्तिर्भवादृशामेव शोभते न पण्डितानां। एतेन चतुर्थदिने समावेशनविधिपराणि बोधायनीयादीनि गृह्यान्तराण्यपि व्याख्यातानि भवन्ति। तद्वचनानामपि सहशयनमात्रपरत्वेनोपपन्नानां व्यवायपर्यन्तपरत्वकल्पनाया असंभावितत्वात्।

ननु समावेशने जप्यतयाविहितस्य "आरोहोरुमि" त्यादि मन्त्रस्यार्थपर्यालोचनायां व्यवायकर्मण्येव स्वारसिकता तस्य प्रतीयते। नैतत्सारं, अन्यत्र विनियोगात्। जपकर्मणि खल्वयंमन्त्रो विनियुज्यते नतु भवतस्स्वारसिकतया प्रतीयमाने व्यवायकर्मणि। मन्त्राश्च विनियोगविध्यनुसारेणैवार्थप्रकाशका भवन्ति नपुनस्स्वातन्त्र्येण कस्यचिदर्थस्य प्रसाधनाय क्षमन्तइति निरूपितं पुरस्तादेव। अपिच मन्त्रार्थस्वारस्यानुसारेण व्यवायाभ्युपगमे पक्षान्तरे भवतो विरुद्धकर्मानुष्ठानप्रसङ्गोऽपि स्यात्। आपस्तम्बोहि "**अन्योवैनामभिमन्त्रयेत**" (२—९—११) इतिसूत्रेण इमंमन्त्रं भर्तुरन्येनापिपुरुषेण जप्यमनुशास्ति। मन्त्रार्थश्च भवद्रीत्याप्रतीयमानो व्यवायो जपसमानकर्तृकएव प्रतीयतइति अवश्यमभ्युपगन्तव्यं। अत्राहिमन्त्रे "**अहं गर्भमदधामि**,, ति अस्मच्छब्देन गर्भाधानकर्ता प्रतिपाद्यते। ततश्च चतुर्थदिने समावेशनमभ्युपगम्य तस्यच विपरीतार्थवादिनः पक्षे परपुरुष

भोगायापि वधूदानमावश्यकमित्यभ्युपगन्तव्यं प्रसज्येत । तस्मादत्यन्तविरुद्धमिदं मन्त्रार्थस्वारस्यालोचनमित्यास्तांतावत् ।

वस्तुतस्तु आपस्तम्बगृह्यपरामर्शे ऋतोःप्रागेव स्त्रीणां विवाह इति स्पष्टं निश्चयकारणमस्ति । सहि लक्षणकथनावसरे युवतीभावं न लक्षणकोटौ परिगणयति । यदि युवतिरेव विवाह्येति तस्याभिप्रायस्स्यात् कुतोऽसौ लक्षणकथनायप्रवृत्तस्तत्र युवतिभावं लक्षणं न पर्यजीगणत् । प्रत्युत **"रातां पालीं मित्रां स्वनुजां वर्षकारीं वर्जयेत्,,** (१—३—१२) इतिसूत्रेण रातामपि कन्यकां वर्जनीय कोटावेव परिगणयति । अत्र राता ऋतुस्नाता तथाच **"राता रमणशीला ऋतुस्नातावा"** इति सुदर्शनाचार्यो राताशब्दं विवृणोति । यत्तु रातामित्यस्य ऋतुस्नातामित्यर्थविवरणमसंगतं भाविसमावेशन विधानविरोधादिति तत् शशशृङ्गधनुषा शत्रुनिबर्हणकल्पं, समावेशन स्यैवापस्तम्बेनाविधानात् समावेशनविधिसद्भावस्थलेऽपि तस्य भोगपर्यन्तत्वाभ्यूहस्य दुस्स्वप्नमात्रत्वाच्च । तस्माद्दतुमती कन्यका सर्वथा विवाहे वर्जनीयेति सुष्ठु आपस्तम्बस्य मतमत्र निर्णीयते । अपिच विवाहकर्मपरिसमापनानन्तरं **"यदामलवद्वासास्स्यादथैनां ब्राह्मण प्रातिपिद्धानि कर्माणि संशास्ति,,** (२—८—१२) इतिसूत्रेण यस्मिन्काले विवाहिता वधूरजस्वला भवति तदा तस्यै (तैत्तिरीयसंहिता. २—९—१) श्रुत्युक्तान् रजस्वलाधर्मान् वरेणोपदेष्टव्यानापस्तम्बो विधत्ते । इदंच धर्मोपदेशविधानमृतुमतीविवाहवादे नैवोपपद्यते । यदि विवाहात्प्रागेव प्राप्तरजस्वलाभावा विवाह्येति कल्प्यते तदा विवाहप्राचीने रजःप्रादुर्भावकालएव रजस्वलाधर्मोपदेशावश्यंभावेन नेदानीं तदुपदेशविधानमुपपद्यते । यदित्वस्यउपदेशविधानस्य

सार्थक्याय विवाहप्राचीनेषु रजःकालेषु धर्मोपदेशएव नास्तीति कल्प्यते तदा प्राचीनोरजःकालोधर्मविहीन आपद्येत। तच्चायुक्तं। नच विवाहप्राचीने रजःकाले रजस्वलाधर्मानुष्ठानं स्त्रीणां नास्तीत्यत्र किञ्चित्प्रमाणमस्ति। अथ प्राचीनस्यापि रजःकालस्य धर्मवत्त्वसिद्धये पित्रादिभिर्वधूबन्धुभिराद्यएव रजःप्रादुर्भावकाले रजस्वलाधर्मा उपदिश्यन्त इति न तत्र धर्मलोपप्रसङ्गइति ब्रूषे एवंसति गृहीतधर्मोपदेशत्वेन कन्यकानां कृतकारितया पुनरिदानीं विवाहोत्तरं पतिवक्तव्यतया तद्धर्मोपदेशविधानं व्यर्थमेव स्यात्। सकृदेवहि धर्मोपदेशो विधीयते नतु प्रतिरजःकालं। पतिधर्मश्च रजस्वलाधर्मोपदेशः पित्रादिभिःक्रियतइतीदमप्यन्याय्यं। तथाच विवाहोत्तरमेव रजस्वलाधर्मोपदेशनिमित्तं स्त्रियाःप्रथमरजःकालं तदा तदुपदेशकरणं भर्तृधर्मंच व्यवस्थापयन्नाचार्यो रजस्वलाभावात्प्रागेव विवाहश्शास्त्रीयो नातःपरमिति व्यक्तं निश्चाययति। एवं बोधायनीयादिषु गृह्यान्तरेष्वपि विवाहोत्तरं रजस्वलाधर्मोपदेशे तात्पर्यमवगन्तव्यं। तथाच पूर्वापरपरामर्शेषु विचार्यमाणेषु गृह्यसूत्राणि ऋतोःप्रागेव स्त्रीणांविवाहः कर्तव्यइत्यत्रैव भगवदापस्तम्बाभिप्रायं निश्चितमावेदयन्तीतिसिद्धम्।

नन्वेवमपि सुदर्शनाचार्यः कदाचिद्विवाहचतुर्थदिनएव ऋतुसमावेशनस्याप्यनुष्ठानप्रसङ्गमभ्युपगच्छति। तथाच तद्वचनं दृश्यते **"अस्मिन्नेवक्रमे यदि दैवादृतुगमनमपि कर्तव्यं स्यात् तदा पूर्वं" "आरोहोरुमि" त्यादिजपः ततो "विष्णुर्योनिमि" त्यादिभिरभिमन्त्रणं"** इति। इदंच वचनं ऋतोःप्रागेव विवाहकरणमिति नियमवादे सिद्धान्ते नोपपद्यते। तदानीमृतुसमावेशनप्रसङ्गस्यैवासं-

भवापत्तेः । तथाच सुदर्शनाचार्यकाले अनृतुमतीविवाहवत् ऋतुमती विवाहोऽप्यनुष्ठीयमानएवासीदिति स्पष्टं विज्ञायतइति चेत्

अत्र वदामः न अनभिप्रेतत्वात् । न ऋतुमतीविवाहश्शास्त्रीयइतिवा तदनुष्ठानं तदानीमस्तीतिवा मनसिकृत्य विवाहचतुर्थदिने सुदर्शनाचार्य ऋतुसमावेशनप्रसङ्गमुपपादयति । किन्तर्हि विवाहोऽनृतुमत्याएव नान्यथा । अथाप्यापत्कल्पतया द्वादशवयस्कायाअपि विवाहः कदाचिदभ्यनुज्ञायते शास्त्रेषु । तथाविधेच विवाहे यदि दैवायत्तेनातर्कितोपनतेन रजसा विवाह्यमानावधूर्मध्येविवाहमृतुमती भवति तदा कदाचिदृतुसमावेशनस्य विवाहाङ्गशेषहोमानुष्ठानकालएव प्रसङ्गस्स्यादित्येव सुदर्शनोऽभिप्रैति नान्यथा । विवाहमध्येहि कन्याया रजस्वलात्वापाते त्रिरात्रं रजस्वलानियमानुष्ठानं कृत्वा स्नातायांतस्यां तच्चतुर्थदिनएव विवाहाङ्गशेषहोमादिकं कर्तव्यं भवति नतु ततःप्राक् । तथाच स्मर्यते

"प्रधानहोमे निर्वृत्ते कुमारी यदि सार्तवा ।
त्रिरात्रेऽपगते पश्चाच्छेषं कार्यं समापयेत्" ॥ इति ।

स्मृत्यन्तरंच

"विवाहहोमे प्रक्रान्ते यदि कन्या रजस्वला ।
त्रिरात्रं दम्पती स्यातां पृथक्शय्यासनाशनौ ॥
चतुर्थेऽहनि संस्नातौ तस्मिन्नग्नौ यथाविधि ।
विवाहहोमं कुर्यातामित्यादिस्मृतिसंग्रहः" ॥ इति ।

तथाच एवंविधे विषये विवाहाङ्गस्य चतुर्थदिनकर्मणः ऋतुसमावेशनस्यच युगपत्प्रसङ्गसंभवेन तद्विषये निर्णयकरणार्थं सुदर्शन इदं वचनमभिदधाति । नत्वेतावता ऋतुमतीविवाहपक्षोऽपि कश्चिदस्तीति

सुदर्शनोऽभिप्रैतीति शक्यंकल्पयितुं। अतएव स तत्रवचने "**दैवाद्दतु गमनमपि कर्तव्यं स्यादि**"ति ऋतुसमावेशनप्रसङ्गस्य दैवायत्तता-माह। यदिपुनर्भवदभ्यूहितरीतिमनुसृत्य विवाहात्प्रागेव निर्ज्ञातार्तवां युवतीमुपयच्छेतेत्यपि कश्चित्पक्षस्तदभिप्रेतस्स्यात् तदा ऋतुसमावेशनं मानुष्यकसिद्धमेव भवतीति तस्य दैवायत्तत्ववचनमनाञ्जसमेव स्यात्। तस्मात्प्रागनृतुमत्याएव सत्याः कन्यकाया मध्येविवाहं दैवाद्रजःप्रादुर्भावएव निर्णयार्थमिदं वचनं भवति।

ननु ऋतुमतीविवाहाभ्युपगमेऽपि कदाचिदेव विवाहचतुर्थदिने ऋतुसमावेशनप्रसङ्गस्स्यात् नतु सर्वदा। ऋतुसमावेशनस्यहि रजःप्रादुर्भावस्यचतुर्थदिनादारभ्य आषोडशाद्दिवसात् यानि द्वादश दिनानि तान्येव कालतया परिगण्यन्ते शास्त्रेषु। तत्र यदिविवाहचतुर्थदिनमुक्तेषु समावेशनयोग्येषु द्वादशसुदिनेषु दैवात्कदाचिदन्तःपाति भवति तदा तत्रऋतुसमावेशनस्य प्रसङ्गः नचेन्नप्रसक्तिरिति। एनमेवाभिप्रायमाश्रित्येदं सुदर्शनाचार्यवचनं प्रवृत्तमितिचेत् सत्यमेवमाह भवान्नृतुमतीविवाहसाधनप्रत्याशया। किन्तु नायमभिप्रायस्सुदर्शनाचार्यस्य भवितुमर्हति दैवग्रहणविरोधादेव। एवमपिहि दैवग्रहणस्यानाञ्जस्यापत्तिस्तथैवावतिष्ठते "**यदि ऋतुगमनमपि कर्तव्यमि**" त्येतावतैव ग्रन्थेन तथाविधमपि पक्षान्तरं भवतःपरिगृहीतमेव भवतीति किमत्रदैवग्रहणेन। किञ्च विवाहचतुर्थदिनस्य ऋतुगमनयोग्येषु षोडशसु दिनेषु कदाचिदन्तःपातित्वमपि न दैवकृतं भवति किन्तु मनुष्यकृतमेव। यदि हि विवोढा पुरुषः विवाह्याया ऋतुस्नानोत्तरं सप्ताष्टदिनाभ्यन्तरएव विवाहकरणमात्मनोनिश्चिनोति तदा तद्विवाहचतुर्थदिनं भवति षोडश दिनान्तःपाति नचेत्तु नभवतीति किमत्र दैवं करिष्यति। अतश्च मनुष्य

कृतमेवैतद्भवति । तस्मादनृतुमतीविवाहएव मध्येविवाहं दैवात्प्रथमार्तवसंभवे ऋतुसमावेशनं दैवकृतं भवति नान्यथा । अतश्च सुदर्शनाचार्यकृतं दैवग्रहणमेव त्वदभिमतं मूलतो निकृन्तति ।

अपिच विवाहमध्ये प्रथमार्तवदर्शनमात्रएव स्मर्तारोऽपि दोष विशेषं कथंचित्तत्प्रायश्चित्तमथतस्याअपरित्यागञ्च स्मरन्ति । विवाहात्प्रागेव ऋतुमत्यास्तु स्त्रियाः परित्यागमेव पठन्ति । तथा हेमाद्रावुदाह्रियते

"विवाहे वितते तन्त्रे होमकालउपस्थिते ।
वधूः पश्येद्यदा पुष्पं प्रथमं दोषसंभवम् ॥
सा वधूश्शूद्रकन्या स्यात् तत्पतिर्वृषळोपमः ॥
तयोः पुत्रस्तु वृषळः ते यान्ति नरकं ध्रुवम्" ॥ इति ।

तथा मरीचिः

विवाहदिवसाद्राजन्नारभ्य प्रथमार्तवा ।
वधूर्या शेषहोमात्प्रागुभौ नरकगामिनौ" ॥ इति ।

एवं विवाहमध्ये प्रथमार्तवसंभवे दोषमभिधाय तत्प्रायश्चित्तोपदेशसमये कायकृच्छ्रानुष्ठानहोमविशेषादिकमुपदिश्य अनन्तरं स्मर्यते

"एवं वै मत्यहं कुर्यात्पञ्चमेऽहनि पूर्ववत् ।
स्नापयित्वा परीधाय पूर्ववच्छुद्धवाससा ॥
पूर्ववज्जुहुयाद्वह्नौ ततश्चान्द्रायणं पृथक् ।
कृत्वा तौ पापशुद्धौ स्तामन्यथा दोषसंभवौ ॥
तदानीं नपरित्यज्या" इति ।

एवं विवाहमध्ये प्रथमार्तवसंभवे प्रायश्चित्तेन परिशुद्धिरपरित्यागश्चेत्युभयमपि स्मर्यमाणं विशेषयति "पूर्वपुष्पवती न चेदि"ति ।

यदि विवाहात्प्रागेव विवाह्या पुष्पवती भवति तदा न प्रायश्चित्तशतेनापि सा शुध्यति नापि सा परिग्राह्या भवतीति तदभिप्रायः । तथा चात्यन्तापदि द्वादशादिवयस्काया विवाहे दैवात्प्रथमार्तवसंभवे प्रायश्चित्तानुष्ठानेन कथंचिच्छुद्धायां तस्यां विवाहचतुर्थदिने ऋतुसमावेशनस्यापि प्रसङ्गस्संभवेदित्येव सुदर्शनस्याप्यभिप्रायः । तस्मात्सुदर्शनाचार्यकाले कालान्तरेवा कदापि ऋतुमत्या अपि विवाहकरणं शास्त्रीय तया विभाव्यमानमासीदित्यत्र न प्रमाणलेशोऽप्यस्तीति सिद्धम् ॥

ननु बोधायनो ऽोपसंवेशनमात्रविधानेन परिसमापयति किंतु अधिकमपि कार्यं विधत्ते योनिविवरणन्नाम । तथाच सूत्रं **"अथास्यास्तोकोतिं विवृणोति प्रजायैत्वेति"** (बो. गृ १-६-१०) इतिचेत् बाढं योनिविवरणं विधत्तएव बोधायनः । तत्किं भवदभिमतं व्यवायकर्माभिप्रेत्य आहोयोनिस्थानस्य मन्त्रेणकिमपि संस्कारकरणमभिप्रेत्येति इदमिह विवेक्तव्यं । संस्कारविधिपरत्वाद्गृह्यसूत्राणामिदमपि किंचित्संस्कारविधानमिति तु युक्तं प्रतिपत्तुं । गृह्यसूत्रंहि संस्कारकाण्डमिति प्रसिद्धं न तत्रासंस्कारकर्मणो विधानमुपपद्यते । तथा चोक्तं तात्पर्यदर्शने **"अर्थप्राध्वस्य परिक्षवे"** (आप गृ ३-९-२) इत्यादिसूत्रावतरणिकायां " संस्कारकाण्डेकर्मान्तरव्याख्यानमसङ्गतमपी"ति । अपिचास्यकर्मणो व्यवायार्थतायामभ्युपगम्यमानायामुपदेशवैयर्थ्यमपरिहार्यंस्यात् । नहि व्यवायप्रवृत्तयोर्यूनोस्तदुपयोगितया चिकीर्षितमेवमादिकं कर्म उपदेशमप्यपेक्षते । तथाहि सति तदुपरिकर्तव्यमपिहि भवद्रीत्या बोधायनेन उपदेष्टव्यं स्यात् । नच तथाकिञ्चिदुपदिशति ।

किंच यदीदं भोगार्थमुपसंवेशनमिति कल्पयित्वा तद्बलेन विवाह्यया भोगयोग्यया युवत्या भवितव्यमिति बोधायनस्याभिप्रायइति उन्नीयते तदा समनन्तरसूत्रं निरालम्बनमप्रसक्तार्थकमेवस्यात्। समनन्तरसूत्रेणाहि "सा यद्यश्रु कुर्यात् जीवां रुदन्तीति जपेदि" ति योनिविवरणकाले यदि कन्यका रोदिति तदा "जीवां रुदन्ती" ति मन्त्रजपं कर्तव्यं विधत्ते बोधायनः। इदमिदानीमसंभावितार्थविषयकं जपविधानं व्यर्थमेवस्यात्। नहि स्वयमेवभोगाभिलाषिण्याः कामावेशपरवशाया युवत्याः पुरुषेण स्तोकोतिविवरणे क्रियमाणे रोदनहेतोः प्रसक्तिरस्ति। नहीदं कर्म तस्या भयहेतुरिति शक्यं संभावयितुमपि। भवद्रीत्याहि साकूतमन्योन्यदर्शनादिलीलायितपुरस्सरं भोगार्थं सन्नह्यतोर्दम्पत्योरिह योनिविवरणेकर्मणि संतोषातिशयेन भवितव्यं। ततश्चानन्दबाष्पविमोचनावसरे तव कः प्रसङ्गो युवत्यां रोदनस्य। तथा चेदं रोदनेनिमित्ते जपविधानमसंभावितविषयमनर्थकमेव युवतीविवाहवादे स्यात्। तदाहीदं सूत्रमर्थवद्भवितुमर्हति यदि विवाह्या वधूरप्राप्तयौवना बालिका भवति यदिच स्तोकोतिविवरणमभोगफलकं संस्कारार्थंच भवति नान्यथा। अप्रादुर्भूतभोगाभिलाषाहि बालिका शैशवस्वभावात् यदि पुंसा गुह्यप्रदेशे बलवत्स्पृश्यते यदिवान्यत्किमपि क्रियते तदा बिभेति रोदितिचेति श्लिष्यते संभवतिच। अतश्च स्तोकोतिविवरणविधानमात्रेणापरिसमापयन् तच्चस्तोकोतिविवरणं कन्यकायारोदनहेतुस्स्यादेवेति तादर्थ्येन मन्त्रजपंच विदधानोबोधायनो विवाह्यामनृतुमतीमभोगाभिलाषिणीं बालिकामेवाभिप्रैतीतिनिर्विचिकित्संव्यक्तीभवति। तथाचेदं कर्म न व्यवायार्थमपितु संस्कारार्थमेवेति चाकामैरप्यभ्युपगन्तव्यं।

संस्कारश्चनाम संचिस्कीर्षितस्यवस्तुनो गुणाधानायवा क्रियेत दोषापनयनायवा। अयंचसंस्कारः भाविसन्तानाद्युपयोग्यदृष्टगुणाधानार्थआवश्यकइति महर्षयो मन्यन्ते। अथवा यदिदैवादेरदृष्टदोषादवाच्येदेशे दोषःकश्चिदान्तरोजातु कन्यकायास्स्यात् तदा सत्यप्यङ्गान्तर साकल्ये सा कन्यका निष्फलैव भवेत्। स्त्रीभावोह्यसाधारणःकश्चित्क्वचिदेवाङ्गविशेषे प्रायेण परिसमाप्तो वर्तते। तच्चेदं योन्याख्यमङ्गमदृष्टदोषनिराकरणक्षमं मन्त्रजपं पुरस्कृत्य निर्दुष्टमादितएव विवाह काले संस्कर्तव्यमिति स्त्रीभावस्य रक्षोपायमुपदिशन्ति मुनयो न भोगं। प्राकृतोहि जनो मन्त्रादृष्टदेवताऽऽद्यनुसन्धानशून्यः वधूरिति, प्रेक्षण मिति, स्पर्शनमिति, योनिरिति, विवरणमिति, यत्किञ्चित्पदश्रवण मात्रेऽपि घुरुघुरायमाणहृदयः स्ववासनानुगुण्येन पुरःस्फुरितं सर्वप्राणि साधारणं जुगुप्सितं दृष्टभोगमेव कर्तव्यमभिसंधत्ते। न पुनरदृष्टैकपरायणेषु महर्षिषु एषस्वभावोऽस्ति। तस्माददृष्टार्थमेवेदं कर्म विधीयते। तत्र कश्चित् तत्स्थानविवरणपूर्वकं मन्त्रजपं कर्तव्यं विधत्त यथाऽसौ बोधायनः, कश्चित्तु तत्स्थानस्पर्शनसह जपं यथाहिरण्यकेशः, कश्चित्तु जपमात्रमिति त्रेधाविधय उपलभ्यन्ते। प्रसिद्धंहि संचिस्कीर्षितेषु वस्तुषु मन्त्रसाध्येकर्मणि शङ्कितदोषाणां तत्तत्प्रदेशानामभिमन्त्रयितु हस्तेन स्पर्शनादिकं मन्त्रशास्त्रेषु। प्रकृतेच लोकदृष्टा संचिस्कीर्षितस्याङ्गस्य जुगुप्सितत्वेन उक्तकर्मणः कन्यकारोदनहेतुत्वेनच सत्यपि स्पर्शनादिविधौ तदकृत्वैव मन्त्रजपमात्रमाचरन्ति प्राचीनाः। न चैतावता तत्फलासिद्धिरितिवा अशास्त्रार्थः कृतस्स्यादितिवा शङ्कितव्यं। मन्त्रसामर्थ्याद्धि तत्सिद्धिर्गृह्यान्तरवत्। यथाह्यसत्यपि योनिविवरणे हिरण्यकेशमते स्पर्शनमात्रेणैव तत्कर्मणस्तत्फलस्यच सिद्धिर्भवति

यथाच स्पर्शनमप्यविधाय जपमात्रविधिस्थले मन्त्रजपमात्रेणैव सर्वसिद्धिः एवमिहापि तत्सिद्धिर्भविष्यतीति न तादर्थ्येन लोकदृष्टिजुगुप्सितं योनिविवरणादिकमाचरणीयमिति प्राचामभिप्रायः। तदेतत्सर्वं मनसिकृत्यैव बोधायनीनां प्रयोगसङ्ग्रहकारेण वेङ्कटेशेन उक्तं **"योनिविवरणादिकं न कुर्वन्ति शिष्टैरनाचरितत्वात् लौकिकविरोधाच्चे"** ति।

अन्यान्यपि एवंजातीयकानि कर्माणि दृश्यन्ते। तद्यथा प्रेतस्य दहनकर्मणःप्राक् निष्पुरीषीकरणन्नाम पाक्षिकं किमपि कार्यं विदधाति भगवानापस्तम्बः। तद्धिप्रेतस्य उदरं विदार्य मलाशयात्सर्वमपि मलं बहिरपोह्य पुनर्विदारितदेशस्य सीवनकरणमित्येवंरूपं कर्म। तच्चेदानीं न क्रियते लोकदृष्ट्या जुगुप्सितत्वात्। तथा प्रसूतिदशमदिने मातापित्रोश्शिशोश्चेति त्रयाणामपि वपनकर्म कर्तव्यमिति स्मृतिकाराः पठन्ति। तद्यथा

**"दम्पती शिशुना सार्धं सूतके दशमेऽहनि।**
**क्षौरं कुर्युस्ततः पूताः स्नानदानादिकर्मसु"** ॥ इति।

प्रसूतायाश्शिशोश्च नैतद्वपनमाचरन्ति शिष्टा लोकजुगुप्सितत्वादेव। तथा छन्दोगानां गृह्येषु विवाह्यमानायाःकन्याया उपस्थाप्लवनं कर्म पिष्टोदकेन कर्तव्यमिति विधीयमानं दृश्यते। इदंचाप्लवनकर्म न साक्षादाचरन्ति सम्प्रदायविदः लोकविगीतत्वादेव। तथाच इदमपि योनिविवरणं नाचर्यतइति नात्र काचिन्न्यूनतापत्तिः।

ननु लोकदृष्टिजुगुप्सितमिति कृत्वा शास्त्रविहितस्यापि कर्मणोऽनाचरणं कथं युक्तं स्यादिति चेत् नायं दोषः महर्षिभिरेव अभ्युपगतत्वात्। महर्षयोहि स्मृतिषु धर्म्यस्यापि लोकविद्विष्टस्य अनाचरणमुपदिशन्ति **"लोकविद्विष्टं स्वर्ग्यमप्याचरेन्नतु"** इति। तस्मा-

त्रयोनिविवरणाद्यनाचरणे शास्त्रविरोधः कश्चिदस्तीति बोध्यं। ननु लोकविद्विष्टमिति कृत्वा यदि शास्त्रीयमपि कर्म अक्रियमाणं दोषाय न भवति तदा शास्त्रविहितमपि बालिकाविवाहं वयं नकरिष्यामहे लोकविद्विष्टत्वादितिचेत् नैतदेवं। नह्यत्र शास्त्रविहिते बालिकाविवाहे लोकविद्वेषहेतुस्तथा कश्चिदर्थोविद्यते यथा जुगुप्सिताङ्गदर्शनादिकं योनिविवरणादौ। विद्वेषोहि जायमानो विकृताङ्गदर्शनादिकं दृष्टं कंचिद्द्वेषहेतुमपेक्ष्यैव जायते लोकस्य नान्यथा। नह्यत्र बालिकाविवाहे तथाभूतं किञ्चिद्दृष्टमस्ति। असत्यपि दृष्टहेतौ ममात्रप्रद्वेषो जायतइति कथनन्तु बुद्धिसम्भेदमूलकमेव स्यात्। तस्मान्नेदं बालिकाविवाहाख्यं कर्म लोकविद्विष्टं भवति। अपिच भवज्जातीयाः पुरुषाःखलु केचिदिमं बालिकाविवाहं विद्विषन्ति नत्वत्र पण्डितानां द्वेषगन्धोऽप्यस्ति। नच लोकोनाम भवज्जातीयकतिपयपुरुषमात्रं। प्रामाणिकोहि जनसमुदायो लोकोनाम भवति। प्रामाणिकानांच लक्षणं स्वयमेव श्रुतिराह **"ये तत्र ब्राह्मणास्सम्मर्शिनः। युक्ताआयुक्ताः। अलूक्षा धर्मकामा स्स्युः"** इति। तत्रभवतामाचारएव धर्मसंशये निर्णयकारणं प्रमाणं भवति न भवादृशानां। भवादृशानान्तु प्रद्वेषे प्रायेण स धर्मोऽपिस्यात्। तस्मात् न भवादृशविद्वेषमात्रेण किञ्चिल्लोकविद्विष्टं भवतीति बोध्यं।

अपिचबोधायनीयसूत्राणामन्यतः परामर्शेऽपिअप्राप्तरजस्कायाः कन्यायाएवविवाहश्शास्त्रीयइतिप्रतीयते। तथाहि विवाहनिरूपणानन्तरं सूत्रयति बोधायनः **"अथ यदा मलवद्वासास्स्यान्नैनया सह संवदेत** (बो गृ १—११) इति। तेनच विवाहानन्तरं यदाकदाचिदेव विवाहिता रजस्वला भविष्यतीति स्फुटं प्रतीयते। तथा **"यस्य पत्नी गृहे ऋतुमतीभवति"** (९—११) इत्यादिना विवाहेन पत्नी

भावमापन्नाया एव वध्वा ऋतुमतीत्वं पश्चाद्भावीति स्पष्टमवबोधयति । किंबहुना कण्ठतएव बोधायनो धर्मप्रश्ने ऋतुमतीविवाहं प्रतिषेधति । तद्यथा—

**"दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।**
**अपिवा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम्" ॥**

(धर्म ४—१) इति ।

न केवलमेतत्प्रतिषेधमात्रं बोधायनश्शास्ति किन्तु रजस्वला विवाहे कन्यकापितुः भ्रूणहत्यादोषमपि स शास्ति ।

**"त्रीणिवर्षाण्यृतुमतीं यः कन्यां न प्रयच्छति ।**
**स तुल्यं भ्रूणहत्यायै दोषमृच्छत्यसंशयम् ॥**
**न याचते चेदेवं स्यात् याचतेचेत्पृथक्पृथक् ।**
**एकैकस्मिन् ऋतौ दोषं पातकं मनुरब्रवीत्"** ॥ इति ।

तस्मादृतुमतीविवाहस्सर्वात्मना शास्त्रनिषिद्धइत्येव बोधायनस्य ऋषेरपि मतमिति निश्चीयते ॥

अत्रापरे कल्पयन्ति । यद्यपीदृशं वचनं किञ्चिदुपलभ्यते बोधायनीये धर्मप्रश्ने । तथाऽपि नेदं बोधायनवचनं भवितुमर्हति । किन्तु अर्वाचीनैः कैश्चिदिमानि वचनानि बोधायनीयत्वेन तद्वचनमध्ये प्रवेशितानीति प्रतीयते । कुतएतदवगम्यतइतिचेत् आप्तयोः पण्डितयो र्वचनप्रामाण्यात् । ननु कावेतौपण्डितौ, बूह्लर्नामा माक्टोनिल्नामाच (Dr. Buhler—Mac-Donnel) द्वौपण्डितौ । तयोराद्योबोधायनीयधर्म प्रश्नस्य भाषान्तरेणविपरिणमयिता । द्वितीयस्तुसंस्कृतभाषाचरितनिबन्ध कर्ता । तौहि चतुर्थप्रश्नोऽयंबोधायनधर्मसूत्रान्तर्गततया कैश्चित्कल्पितइत्य भिप्रेतः । युक्तंचैतदेवमेवेतिनिश्चेतुं । अत्रहिवचने "**पातकंमनुरब्रवीदि**"

ति उच्यते । नह्यत्र रजस्वलाविवाहे कन्यापितुरेवं पातकबोधकं मानवं किंचिद्वचनमुपलभ्यते मनुधर्मशास्त्रे । अतश्चासतोमनुवचनस्यानुवादादेव इदंवचनं मिथ्याबोधायनीयं कल्पितमिति निश्चेतुं शक्यमिति ।

अत्रब्रूमः न साहसिक्यात् । साहसिक्यंहि एतत्प्रत्यक्षसिद्धस्य वचनस्यासत्यत्वकल्पनं । इमानिहि वचनानि बोधायनीयतया प्रत्यक्षमेव सांप्रदायिकैरधीयमानानि दृश्यन्ते ।

संप्रतिपन्नेषु महानिबन्धेषुच उदाह्रियन्ते । स्मृतिमुक्ताफले हि आचारकाण्डे वैद्यनाथदीक्षितोविवाहप्रकरणे स्पष्टमिमानि वचनानि बोधायनीयानीत्युदाजहार । ईदृशानांच वचनानां यस्यकस्यचिदविज्ञात कुलगोत्रसूत्रक्रमस्यानार्यस्य वचनमवष्टभ्यासत्यत्वकल्पनं साहसकरणमेव । सन्तु नामान्यत्रान्ये कौशलवन्तः कामं । नहि श्रुतिस्मृतिगृह्यसूत्रादिस्वरूपनिर्णये वैदिकानामार्याणां संप्रदायादन्यत्किञ्चित्प्रमाणमितिशक्यं संभावयितुमपि । आर्याएवहि श्रुत्यादिकं शब्दप्रमाणमप्रच्यवेनाध्यापकसम्प्रदायमवलम्ब्य परिपालयन्तो वर्तन्ते । यौचेमौ पुरुषावेषां वचनानां मिथ्यात्ववादिनौ भवतोदाहृतौ तौखल्वनार्यकुलीनौ । नह्येतावध्यापकसंप्रदायगन्धमपि जानाते । यद्यपि संप्रदायपालकानामार्यमहाजनानां विस्पष्टमपि वचनमगणयन्तोभवज्जातीयाःपुरुषाः म्लेच्छवचनान्युपनिषत्कृत्यश्रद्दधते । तथाऽप्याधिगतवैदिकसंप्रदायमहिमानो नवयमीदृशान्यनार्यवचनानि स्वप्नेप्याद्रियामहे । अपिच

बूहल्मोक्टोनिल् इत्येतौ धर्माचार्यपदं गतौ ।
यत्प्रसादेन कालाय तादृशे कलये नमः ॥

यदपि बोधायनीयत्वेअमीषां वचनानामविश्वासकारणमन्यदभ्यधायि असतोमनुवचनस्यानुवाददर्शनादितितत्प्रतिब्रूमः। अनभिज्ञजल्पित

मेतत् "बोधायनानूदितं मनुवचनमेव नास्ती" ति । नहि मनुधर्मशास्त्रं कात्स्न्र्येनर्षिवदधुनातनो यथावज्जानाति । तत्खलु बहुप्रपञ्चंब्रह्मा प्रथमतो निर्माय मनवे साक्षादुपदिदेश । तच्च ब्रह्मणस्सकाशाद्गृहीतं धर्मशास्त्रं स्ववचनेन संक्षिप्य मनुर्मरीच्यादीनृषीन् ग्राहयाञ्चकार । तेषुचर्षिषु भृगुरिदं शास्त्रमर्वाचीनेभ्यऋषिभ्यश्श्रावयामास । तदेवभृगुप्रोक्तं संक्षेपमनुधर्मशास्त्रमिदानीं लोके प्रथते । तथाच तत्रैवप्रथमाध्यायेऽयमर्थः स्मर्यते—

**"इदं शास्त्रन्तु कृत्वाऽसौ मामेव स्वयमादितः ।**
**विधिवद्ग्राहयामास मरीच्यादींस्त्वहं मुनीन्" ॥**
**एतद्वोऽयं भृगुश्शास्त्रं श्रावयिष्यत्यशेषतः ।**
**एतद्धि मत्तोऽधिजगे सर्वमेषोऽखिलं मुनिः" ॥**

(म १—५८, ५९) इति ।

इदंच वचनं प्राञ्चोव्याचक्षाणा आचक्षते **"ब्रह्मणा शतसाहस्रमिदं धर्मशास्त्रं कृत्वा मनुरध्यापितआसीत् ततस्तेनच स्ववचनेन संक्षिप्य शिष्येभ्यः प्रतिपादितमि"** ति । एवं संक्षेपविस्तराभ्यां द्विप्रकारमपि मानवं शास्त्रमृषयोयथावज्जानन्ति महाप्रज्ञत्वात्साक्षादेव मनोस्सकाशाद्गृहीतोपदेशत्वाच्च । तथाविधेषुच महर्षिषु कश्चिद्बोधायनोनाम यदि "मनुरेतदेवमाहे" त्यनुवदति कथमस्मादृशः कश्चित् तन्नास्त्येवेति साधयितुमलंस्यात् । संक्षेपशास्त्रमपिहि यथावदस्मादृशा ज्ञातुं नप्रगल्भन्ते । अविज्ञातपूर्वमादिमं विस्तरशास्त्रं नाम्नापि नविजानन्तीति किमुवक्तव्यं । अश्रुतपूर्वेच शास्त्रे "इदंवचनमेव नास्ती" ति ब्रुवन्कथंकश्चिदभिज्ञस्स्यात् । तस्माद्बोधायनानूदितं मनुवचनमेव नास्तीत्यनभिज्ञजल्पितमेवैतत् ।

प्रत्यक्षदर्शनाच्चायुक्तमिदं। अपिच बोधायनवचनेनानूद्यमानोऽर्थः प्रत्यक्षमेव संक्षेपेऽपि मनुधर्मशास्त्रे दृश्यते। अविजानन्तः पुनरेतद्भवज्जातीयाःपुरुषा अस्थाने मोमुह्यन्ते। द्विविधोह्यनुवादोनामग्रन्थेषु भवति। कश्चिदनुवादश्शब्दस्यैव भवति कश्चित्पुनरर्थमात्रस्य। यत्रपुनरर्थमात्रस्यानुवादो न तत्र तथाविधवचनानुपूर्वीदर्शनं मूलग्रन्थे संभवति। अपितु तदर्थमात्रं शब्दान्तरेण प्रतिपाद्येत। तद्यथा शारीरकश्रीभाष्येऽध्यासलक्षणप्रसङ्गे **"परत्र पूर्वदृष्टावभास"** इति वचनस्वरूपं दृश्यते। उपरिष्टादेतदनुवादसमयेच **"अध्यासोनामातस्मिंस्तद्बुद्धिरित्यवोचाम"** इति भाष्यवचनं दृश्यते। नहीदं वचनमध्यासलक्षणस्थलेऽस्ति। नचाध्यासलक्षणस्थले ईदृशवचनादर्शनादिदं वचनं केनचित्कल्पितमसत्यं स्यादित्यमूढः कश्चिदध्यवस्येत्। एवमिहापि **"एकैकस्मिन्नृतौ दोषं मनुरब्रवीदि"** ति नायं शब्दानुवादः। अपित्वर्थानुवादः। अर्थश्चायं शब्दान्तरेण मनुना स्पष्टमभिधीयमानो दृश्यते। तथाच मनुराह **"कालेऽदाता पितावाच्यः"** इति। "काले विवाहयोग्ये ऋतोः प्राक्काले अदाता कन्यादानमकुर्वन्पिता वाच्यः दोषभाक्स्यादि" ति तदर्थः तच्च निरूपितमादावेव। अयमेवमनूक्तोदोषो बोधायनेन शब्दान्तरेणानूद्यते। नचैवं सत्यसदनुवादोयमितिशक्यं केनचिन्निरूपयितुं। एवं शब्दान्तरेणमनूक्तमर्थं शब्दान्तरेणानुवदन्त्यन्यान्यपि स्मृतिवचनान्युपलभ्यन्ते। तद्यथा—

**"वैवाहिकोविधिस्स्त्रीणां संस्कारो वैदिकःस्मृतः"** इति मनुर्ब्रूते। इदञ्च मनुवचनार्थं शब्दान्तरेणानुवदति व्याघ्रपादः—

**"स्त्रीणामुपनयनस्थाने विवाहं मनुरब्रवीत्"** इति। एवमन्यान्यपि तत्रतत्र द्रष्टव्यानि। ईदृशंच पुरोवादानुवादप्रकारमेवाविजानन्तः

किल केचिदस्थाने कोलाहलं कुर्वन्ति । तथाच सतएव मनुवचनस्या नुवादादिदं सत्यमेव बोधायनीयं वचनं भवति । तस्माद्बोधायनः कण्ठतएव ऋतुमतीविवाहमत्यन्तदुष्टं व्यवस्थापयतीति न बोधायनगृह्येण तत्साधनप्रत्याशा घटते । तदेवं प्रबलप्रमाणतया परैस्संभाव्यमानानि यान्यापस्तम्बबोधायनयोर्गृह्यसूत्राणि तान्येव ऋतुमतीविवाहस्य प्रतिषेधकानीति स्फुटंनिरूपितं । एतेन प्रधानमल्लनिबर्हणन्यायेन गृह्यान्तराण्यपि व्याख्यातानि वेदितव्यानि ।

अथ मनुस्मृतिं विचारयामः । तत्रापरे मन्यन्ते मनुस्मृतिर्हि विचार्यमाणा बहुश ऋतुमतीविवाहश्शास्त्रीयइत्यत्रैव प्रमाणं भवति । तथाहि तृतीयेऽध्याये वर्जनीयान्विवाह्यया भूयसोदोषानाचक्षाणोमनुर्न ऋतुमतीत्वंनाम कन्यकादोषइत्याचष्टे । यदीदमृतुमतीत्वं दोषत्वेनाभिप्रेतं स्यादवश्यमेनदपि दोषान्तरवन्मनुः परिगणयेत् । तस्मान्नर्तुमतीभावः विवाह्यायादोषोभवति किन्तु गुणएव ॥ (१)

किञ्च नवमेऽध्याये कण्ठतएव मनुः ऋतुमत्याएवकन्याया विवाहं कर्तव्यं व्यवस्थापयति । तत्रहि पठ्यते

"उत्कृष्टायाभिरूपाय वराय सदृशायच ।
अप्राप्तामपि तां तस्मै कन्यां दद्याद्यथाविधि ॥ (९-८८)
काममामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि ।
नचैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥ (८९)
त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ।
ऊर्ध्वन्तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥ (९०)
अदीयमाना भर्तारमधिगच्छेद्यदि स्वयम् ।
नैनः किञ्चिदवाप्नोति नच यं साऽधिगच्छति ॥ (९१)

**त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।**
**त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः'' ॥ (९४) इति ।**

तत्राद्येन श्लोकेन अत्युत्कृष्टवरलाभे मुख्यकालमप्राप्तायाअपि कन्यायादानं यद्यपि विधीयते तथापि समनन्तरश्लोकत्रयार्थपर्यालोचनायां ऋतुमतीविवाहएव शास्त्रीयइति मनोरभिमतोर्थइतिस्पष्टं निश्चीयते। तत्रप्रथमे श्लोके विवाहंविनापि ऋतुमत्याः कन्याया मरणपर्यन्तं पितृगृहे अवस्थानं कण्ठतउच्यते। तथा द्वितीयश्लोके ऋतोःपरस्ताद्वर्षत्रयपर्यन्तं तूष्णींस्थितायाः कन्यायास्ततःपरं स्वयंवरन्यायेन सदृश पतिप्राप्तिर्विधीयते। एवंवर्षत्रयानन्तरं ऋतुमतीविवाहेपि तस्यास्तां विवाहयितुः पुरुषस्यच न दोषगन्धोप्यस्तीति तृतीयश्लोके प्रतिपाद्यते किमितोऽप्यन्यहृतुमतीविवाहे प्रमाणं गवेषणीयं। अनेनहिसन्दर्भेण ऋतूत्तरएवकालो विवाहे मुख्यइतिस्पष्टं निर्णीयते। ऋतुप्रादुर्भावकालश्च स्त्रीणां द्वादशं वयइत्युत्सर्गः। तथाच प्राञ्चउदाहरन्ति "ऋतुदर्शनञ्च द्वादशवर्षाणामिति स्मर्यते"इति। एवंच द्वादशाद्वयसऋतोर्वा परस्ताद्वर्षत्रयपर्यन्तं पितुः कन्यादाने अधिकारो भवति। तदनन्तरञ्च स्वयमेवाधिकारिणी पतिप्राप्तौ कन्यका भवति। एनयोश्चान्यतरपक्षएव विवाहे मुख्यः। अत्युत्कृष्टवरलाभेतु कदाचिदृतोःप्रागपि विवाहकरणं कथंचिद्गौणतया मनुरभ्यनुजानाति। तत्रापि नावश्यं तथैवकर्तव्यमिति निर्बन्धे प्रमाणमस्ति। ऋतोःपरस्तादेव विवाहइति मुख्यपक्षाश्रयणन्तु निर्विचिकित्सः पन्थाः। अतएवाष्टवर्षाया विवाहकरणे "धर्मेसीदति सत्वरः" इति धर्मावसादभयं कारणं प्रदर्शयति मनुः। तेनच विज्ञायते धर्मावसादभयाभावे अष्टवर्षाविवाहो नकार्यइति। तस्मादृतोः परस्ताद्विवाहएव मुख्यइति मनोर्मतं निश्चिनुमहे। (२)

किञ्च मनुकाले विवाहमनापन्नाअपि युवतयो ऽभूवन्निति तद्वचनेनैव ज्ञायते। अष्टमाध्यायेहि मनुः कन्यादूषकस्य सद्योवधं विधाय कन्यकायास्सकामत्वे सोऽयं वधोनभवतीति पर्युदास्थत्

"योऽकामां दूषयेत्कन्यां स सद्योवधमर्हति ।
सकामां दुषयंस्तुल्यो नवधं प्राप्नुयान्नरः" ॥ (८-३-६४)

इति ।

कामश्चायं भोगाभिलाषएव कन्यकाया विवक्षितो नार्थान्तरं। सच कथमप्राप्तयौवनाया भवितुमर्हति। तस्माद्युवतिरपि कन्यैवेति मनुरभिप्रैति। कन्याशब्दश्च युवतिरयुवतिर्वायावत्पुरुषेण न संसृज्यते तावत्स्त्रियमाह। सतितु पुंसासह संप्रयोगे कन्याशब्दोनिवर्तते। तथा कन्यापदपर्यायं कुमारीशब्दमधिकृत्य "वयसिप्रथमे" (पाणि ४-१-१२०) इतिसूत्रे आचार्यःपतञ्जलिरप्यभाषिष्ट "कथंतर्हि वयोगम्यते। संबन्धाद्वयो गम्यते। कोऽसौसंबन्धः। योऽसौ पुंसासह असंयोगः" इति। तथाच पुंसंयोगरहितां स्त्रियमभिधत्ते कन्याशब्दइति स्फुटीभवति। पुरुषसम्बन्धविहीनास्त्रियस्सर्वाअपि कन्याएव भवन्ति। ताश्च विवाहार्हाइति मनुराह "पाणिग्रहणिकामन्त्राः कन्यास्वेव प्रतिष्ठिताः" (८-२२६) इति। तस्मात्पुरुषसंसर्गविहीनायुवतयोऽपि कन्यका विवाहयोग्याएवेति निश्चितोमनोरभिप्रायइति। (३)

(I. A.) अत्र प्रतिविधीयते। न। नर्तुमतीविवाहश्शास्त्रीयइति मनोरभिप्रायश्शक्यो निरूपयितुं वर्षशतेनापि। सर्वमेतदव्युत्पन्नानां संभ्रममात्रं। तथाहि यत्तावदुच्यते वर्जनीयेषु कन्यकादोषेषु ऋतुमतीत्वमपरिगणयन्मनुः युवतीविवाहमभिप्रैतीति, असंगतैषा कल्पना। नहि दोषेष्वपरिगणनमात्रात्कश्चिदर्थोऽभिप्रेतइति कल्पनं सांप्रतं भवति

तृतीयप्रकारस्यापि संभवात्। नाप्यप्रतिषेधमात्रात्किञ्चिदभिमतं भवति किंतर्हि वचनाद्भवति। तुल्यश्च वचनादर्शनमुपादेयत्वेऽपि। यथैवतर्हि दोषेष्वपरिगणनादृतुमतीत्वं न दोषः किन्तु गुणइति भवान्कल्पयति एवं गुणेष्वपरिगणनादृतुमतीत्वं न गुणः किन्तु दोषएवेत्यपि कल्पयितुं शक्यते। तुल्योहि गुणेष्वप्यृतुमतीत्वस्य वचनाभावो मनुस्मृतौ। नहि

**"अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्।**
**तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत्स्त्रियम्"** ॥ (३—१०) इति

कन्यकागुणपाठे ऋतुमतीत्वमपि गुणं मनुः पठति। तस्मादसाधकः प्रथमोहेतुः ॥

(I. B.) किञ्च ऋतुमतीत्वं न दोषकोटावन्तर्भवति। अतश्च न तत्परिगणनं दोषप्रकरणे युज्यतइति प्रतिपादितं गृह्यार्थवादे ॥

(I. C.) अपिच ऋतुमतीत्वस्य कन्यकादोषेषु परिगणनं नास्तीत्येव तावदसिद्धं प्रथमतस्तस्यैव परिगणनात्। क्षतयोनिर्हि ऋतुमती नाम भवति। क्षतयोनिश्च कन्या सपिण्डादिवद्द्विजातीनां सतां विवाहार्हैव न भवतीति आदितएव विवाहप्रकरणे मनुः प्रतिषेधति। तृतीयाध्याये मानवे पठ्यते

**"असपिण्डाच या मातुरसगोत्राच या पितुः।**
**सा प्रशस्ता द्विजातीनां दारकर्मण्यमैथुनी"** ॥ (३-५) इति।

अमैथुनी मिथुनभावायोग्या अक्षतयोनिरित्यर्थः। यथाच असपिण्डाइति विशेषणेन सपिण्डाविवाहं प्रतिषेधति मनुः एवं अमैथुनी इति कन्यकाविशेषणेन मैथुनी क्षतयोनिः ऋतुमत्यपि विवाहानर्हेति ऋतुमतीविवाहप्रतिषेधमपि कण्ठतएव शास्ति मनुः। तस्मादृतुमतीत्वं कन्याया न प्रतिषेधतीति असदेतत्।

ननु साहसमेतद्भवति उक्तरूपेण वचनादर्शनात् । "असपिण्डाच यामातुरि" त्यादिवचनेहि "दारकर्मणि मैथुने" इत्येवपाठो दृश्यते । नकेवलमेवं पाठमात्रं । व्याचक्षाणाश्च प्राञ्चएवमेव पाठमुपादाय विवृण्वंति । "दारकर्मणि दारत्वसंपादके विवाहे प्रशस्ता मैथुने मिथुनसाध्ये अग्न्याधानकर्मणि पुत्रोत्पादनायश्च" इतिहि व्याचक्षते । तत्रैवंसति वचनस्वरूपे "दारकर्मण्यमैथुनी" इति पाठं परिकल्प्यार्थान्तरवर्णनं साहसमात्रमेव भवति ।

अत्रोच्यते । यद्यप्येवंरूपमेव वचनमिदानीन्तनेषु मुद्रितपुस्तकेषु दृश्यते । व्याख्यानंच भवति किञ्चित्तदनुसारि । तथाऽपि दारकर्मण्यमैथुनी इत्येव सांप्रदायिकः पाठइति निश्चीयते, निबन्धेषु विशिष्य उदाहरणात् विवरणाच्च । निबन्धारोहि वैद्यनाथदीक्षितादयः प्रामाणिका मनुवचनमिदं "दारकर्मण्यमैथुनी" इत्येवमानुपूर्वीकमेव स्वनिबन्धेषु उदाहरन्ति । न केवलमुदाहरणमात्रं किन्तु "अमैथुनी अक्षतयोनिः" इति विस्पष्टं व्याचचक्षिरेच । स्पष्टश्चेदमादितएव विवाह प्रकरणे * वर्णाश्रमाचारकाण्डे । तस्मात् "अमैथुनी" इतिपाठएव सांप्रदायिकइति निश्चीयते ।

नन्वेवमपि नेदंवचनमवलम्ब्य कस्यचिदर्थस्य प्रसाधनं घटते संदिग्धत्वात् । नह्येवमेव वचनस्वरूपमिति निर्णयस्संभवति पाठस्य विवरणस्यच उभयथा दर्शनात्, अन्यतरप्रामाण्यनिर्धारणकारणाभावाच्च । तस्मात्कथमनेन ऋतुमतीविवाहप्रतिषेधस्साध्यते । उच्यते पठनविवरणयोरुभयथादर्शनेऽपि यतरः पाठोमनोरभिमतइत्यत्र किञ्चिन्निर्णयकारणमुपलभ्यते ततरएव ग्राह्योभवति । तदितरस्तु पाठःप्रामा-

* கும்பகோணத்தில அச்சிட்ட கிரந்தபுஸ்தகத்தில் 214, வது பக்கம் 16 வது வரிமுதல் பார்க்க.

दिकइति स परित्यक्ष्यते । सतिचसन्देहे स्मर्तृतात्पर्यमेव निर्णयकारण मिति युक्तं प्रतिपत्तुं । अमैथुनीइति पाठएवमनोराभिमतइत्यत्र निश्चय हेतुरस्ति । दशमाध्यायेहि ब्राह्मण्यादिजातिनिर्णयप्रकरणमारभमाणो मनुराह—

**"सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु ।**
**आनुलोम्येन संभूता जात्या ज्ञेयास्तएव ते"** ॥ (१०—५)इति।

अत्र अक्षतयोनिष्विति नेदं संभवक्रियाविशेषणाभिप्रायं अक्षत योनिषु ये संभूताइति विरोधात् । नह्यक्षतयोनिः काचित् प्रसूयेत । अक्षतयोनिश्च प्रसूताचेति विरुद्धंह्येतत् । किन्तु पत्नीविशेषणमेतत् या अक्षतयोनयएव सत्यः विवाहेन पत्नीभूताः तासुसंभूताइति । तथा च याह्यक्षतयोनिरेव सती विवाहेन पत्नीभवति तस्यां ब्राह्मणस्य जात एव पुत्रोब्राह्मणो भवति अन्यथा पुनरब्राह्मणएव स सन्तानइति मनु- रनेनवचनेन निर्धारयति । नहीदं वचनमन्यथाशङ्कितुं शक्यते। एवं निर्धारयंश्च मनुः पत्नीत्वसाधनं विवाहं कथन्नुनामक्षतयोनीनां प्रशस्त मभ्यधास्यत् । जातिभ्रंशकरोऽपि तदा स विवाहोभवति मन्वभिप्रायेण ऋतुमतीविवाहस्य कर्तव्यत्ववचनमेव तावदुत्तरग्रन्थाविरुद्धं । प्राशस्त्यं पुनरस्यकुतस्त्यं । अपिचैवंसति अक्षतयोनिरेव या विवाह्यते तस्यां जातएव ब्राह्मणोभवतीति विवाहःपरं क्षतयोनीनामेवेतिच पूर्वापरविरु- द्धाभिभाषी मनुर्व्याहतार्थआपद्येत । वैयर्थ्यंच पक्षान्तरे स्यात् । अपिच मैथुनइतिपाठे तद्वचनं व्यर्थमेवभवति । "दारकर्मणि प्रशस्ता" इत्येतावत्युच्यमानेऽपि पत्नीसंबद्धेषु दृष्टादृष्टेषु सर्वत्र प्राशस्त्यमुक्तमेव हि भवति । किमनेन पृथङ्मैथुनग्रहणेन । तथाच पक्षान्तरे अस्य पदस्य वैयर्थ्यमपरिहार्यमेव स्यात् । तस्मात् "अमैथुनी" इत्येव मनोरभिमतस्संप्रतिपन्नस्सार्थकश्च पाठइति दृढमध्यवस्यामः ।

नन्वेवंसति कुतःपुनरयं पाठविपर्ययस्समापतितः, मुद्रणव्यापारस्यायंदोषइति गृहाण ! अत्यल्पश्चायं दोषो मुद्रणस्य पदविपर्ययोनाम। श्लोकविपर्ययादिर्भूयान्दोषो दृश्यते मुद्रितपुस्तकेषु। तद्यथा अत्रैव मनुस्मृतौ द्वितीयाध्याये "**श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रंतु वै स्मृतिः**" (२—१०) इतिश्लोकात्परं "**योऽवमन्येत ते मूले**" (२—११) इति श्लोकात्पूर्वं—

"**श्रुतिं पश्यन्ति मुनयस्स्मरन्तिच तथास्मृतिम्।**
**तस्मात्प्रमाणमुभयं प्रमाणैः प्रमितं भुवि**" ॥ इति

श्लोकः कश्चिन्मानवतया महानिबन्धेषूदाह्रियमाणो दृश्यते। सचायमिदानीन्तने पुस्तके न दृश्यते। न ह्येतावता अयंश्लोकएव मानवो न भवतीतिशक्यं वदितुं। तस्मान्मुद्रितपुस्तकलेखनावष्टम्भ प्रत्ययेन संप्रतिपन्नपाठनिराकरणमेव साहसिक्यमित्यास्तामेतत्। तथा च मनुः कण्ठतएव द्विजातीनामृतुमतीविवाहमादावेव स्पष्टं प्रतिषेधती ति विपरीतः प्रथमोहेतुः ॥

(2 A.) यच्चान्यदुच्यते नवमाध्याये—

"**काममामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यापि।**
**नचैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित्**" ॥

इति वदतोमनोरपि ऋतुमत्याः कन्यायाः पितृगृहे अवस्थानं संमतमिति। अत्र ब्रूमः। नैतद्युक्तं। नह्यसौ मनोरभिमतोऽर्थः अनेनहि वचनेन गुणहीनाय कन्यकादानप्रतिषेधमेव शास्ति मनुः निकृष्टाय वराय कन्यादानमत्यन्तनिन्दितमिति। नत्विह ऋतुमत्याः पितृगृहेऽवस्थानंनाम किञ्चिदर्थान्तरमभिधीयते, तात्पर्याभावात्। एक वाक्यत्वाच्च। एकंहीदंवाक्यं "**काममामरणादि**" त्यादि। तत्र

गुणहीनाय कन्यादाननिषेधऋतुमत्याएव पितृगृहे अवस्थानमितिच उभयविधित्सायां हि वाक्यं भिद्येत। नचैतन्न्याय्यं। तस्मादेकमेवेदं वाक्यं। एकवाक्यत्वेच सति काममामरणादित्यादिः निषेधविधेरस्याय मर्थवादः। नतु ऋतुमत्यवस्थानविधायकमेतद्भवति। "तिष्ठेदि" ति च नायंविधिशब्दः किन्तु विधिवन्निगदोऽयमर्थवादः। कामशब्दोहि स्वाच्छन्द्यवाची प्रयुज्यमानो विधिशक्तिमिह प्रतिबध्नाति। यदिदमृतु मत्याएवकन्यकायाः पितृगृहेऽवस्थानं एतत्कामकारकृतामिति काम-शब्दः प्रत्याययन् तत्र चोदनाव्यापारस्य प्रसङ्गमपि निवारयति। अपिशब्दोऽप्ययं विधिं प्रतिबध्नाति। सहि "अपिस्तुयाद्वृषळमि" त्यादौ गर्हावचनस्समधिगतः। अत्रापिवचने स तथैव भवितुमर्हति, अर्थान्तरस्य समुच्चयादेरिह समन्वयाभावात्। अपिचेह विधित्सितात् दानकर्मणः प्रतिषेधादेव अर्थात्कन्यकायाः पितृगृहे अवस्थानं सिद्ध मेवभवति। अर्थसिद्धेच तस्मिन्विधिःकल्प्यमानोऽपि व्यर्थएवस्यात्। नहि सिद्धेअर्थे विधिर्घटते। तथाच यन्निन्दितं पितृगृहे ऋतुमत्याः कन्यकायाः कामकारेणावस्थानं तदपि वरं नतु गुणहीनाय कन्यका दानमिति सार्थवादो निषेधविधिरेषः।

एवमृतुमत्याः कन्यकायाः पितृगृहे अवस्थानं प्रतिषेधविधेरर्थ वादत्वेन निबध्नन् मनुस्तदत्यन्तनिन्दितमितिख्यापयति। एवंहि वाक्य शैली लक्ष्यते। निषेधचोदनार्थवादेषु निषिध्यमानापेक्षया यदन्यदनु-ष्ठेयमभिधीयते तत्तदत्यन्तानिषिद्धामिति। तद्यथा "आत्मानंवाऽपि भुञ्जीत न विप्रं वेदवर्जितमि" त्यनेन वचनेन वेदविहीनविप्रस्य श्राद्धभोजननिषेधश्चोद्यते। तदर्थवादभूतेच पूर्ववाक्ये तथाविधभोजना पेक्षया श्राद्धे स्वयंभोजनमपि अनुष्ठेयमित्यभिधीयते। नहि स्वेनैव

क्रियमाणे श्राद्धे स्वयमेव भोजनं जातुशास्त्रीयंभवति । तद्धि अश्रोत्रियभोजनापेक्षयाऽपि निन्दितमेव भवति । एवमिहापि यन्निन्दितं गुणहीनवराय कन्यादानं प्रतिषिध्यते तदपेक्षया अनुष्ठेयत्वेनाभिधीयमानमृतुमत्याः कन्यायाः पितृगृहेअवस्थानं ततोऽपि निन्दितमिति प्रतीयते ।

योहि मन्यते विधिवन्निगदं प्रतिषेधार्थवादमाश्रित्य तदभिहितोऽप्यर्थश्शास्त्रीयोभवतीति स मेधावी एवमपिमन्येत "**अपिवा मातरं गच्छेदामन्तु न कदाचन**" इत्यामप्रतिग्रहनिषेधार्थवादं विधिवन्निगदमाश्रित्य मातृगमनमपि विधिसिद्धमिति । तथाच "काममामरणादि"त्यादिवचनेन ऋतुमत्याःकन्यकाया अवस्थानं विधीयतइति बालिशजल्पितमेतत् । प्रत्युत विपरीतार्थकमेवैतद्भवति दानात्प्राक्कन्यकाया ऋतुदर्शनमत्यन्तनिन्दितमितिहि इदमेववचनं मनोरभिप्रायं निश्चितमाविष्करोति । अन्यथा निषेधचोदनार्थवादत्वेन एवं निबन्धनमेव न घटते । तथाच अनेनैववचनेन विवाहात्प्राक्कन्यकानामृतुमतीत्वं निषिद्धादपि निषिद्धमिति मनुस्सचमत्कारमुपदिशतीति सिद्धम् ॥

(2, B) अपिचापद्धर्मोपदेशपरमेतत्प्रकरणमितिविज्ञायते । पुरस्ताद्धि नवमाध्याये मनुः "**अतःपरं प्रवक्ष्यामि योषितांधर्ममापदि**" (९ ५६) इति आपद्धर्ममेव स्त्रीणामभिधास्यमानमादितःप्रतिजज्ञे । तथाउपसंहरिष्यतिच परस्तात् "**एषस्त्रीपुंसयोरुक्तोधर्मो वो रतिसंज्ञकः । आपद्यपत्यप्राप्तिश्च**" (९—१०३) इति । एवमुपक्रमोपसंहाराभ्यामापद्धर्मोपदेशपरत्वेन निश्चिते प्रकरणे मध्येइदमधीयते "**काममामरणात्तिष्ठेदि**" त्यादि । स कथं मुख्यधर्मोपदेशइतिशक्यः परिग्रहीतुं । एतेन वर्षत्रयात्परं स्वयंवरन्यायेन ऋतुमत्याःपतिलाभवचनमपि व्याख्यातं भवति । तस्याप्यापद्धर्मत्वात् ।

ननु आपद्धर्मतयाऽपिवा ऋतुमतीविवाहोऽयमनुशिष्यतएवहि शास्त्रेण। सत्यमनुशिष्यते शास्त्रेण। तथाऽपि नायं सार्वदिकोधर्मो नापिमुख्यो भवति। नह्यापत्कालिकोधर्मोऽनापद्यपि धर्मोभवितुमर्हति। एवंसत्यभक्ष्यभक्षणादिकमपिहि मुख्योधर्मआपद्येत। तदप्यापदि धर्ममनुशासिष्यति मनुर्दशमाध्याये

**"जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः।**
**आकाशमिव पङ्केन न स पापेन लिप्यते"** ॥ (१०-१०४) इति।

अजीगर्त, वामदेव, भरद्वाज, विश्वामित्रप्रभृतीनामृषीणां सुतहनन, श्वमांसभक्षण, तक्षगवीप्रतिग्रह, चाण्डाळश्वमांसभक्षणादीनि चरितानिच अत्र निदर्शनान्युदाजहार। नह्येतावता मुख्यधर्मोऽसौ भवति। आपद्गतेनापिहि न यथेच्छमाचरितव्यं। अन्ततः प्राणधारणमात्रार्थमेवहि कर्म अभ्यनुज्ञायते। श्रूयतेच छान्दोग्ये चाक्रायणउषस्तिरापद्गतःइभ्येनसामिखादितान्कुल्माषान् भिक्षित्वा भक्षयन्नपि तत्क्षणएव तद्दत्तमुदपानमुच्छिष्टबुद्ध्या निराचकारेति। योहिशक्तस्सन्नप्यापदभिनयेन गौणेधर्मे प्रवर्तते स सांपरायिकात्फलादवश्यं प्रच्यवते फलदातुरीश्वरस्य वञ्चयितव्यत्वायोगात्। तथाच एकादशे मनुस्स्मरति

**"आपत्कल्पेन योधर्मं कुरुतेऽनापदि द्विजः।**
**स नाप्नोति फलं तस्य परत्रेति विचारितम्"** ॥
(११—२८) इति।

**"प्रभुःप्रथमकल्पस्य योऽनुकल्पेन वर्तते।**
**न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम्"** ॥
(११—३०) इतिच।

तस्मान्नानेन मिषेण अत्यन्तापद्धर्मोऽयमृतुमतीविवाहश्शक्यो मुख्यतया जगत्यवतारयितुम्।

(2.C.) किञ्च आपद्धर्मोऽप्ययं न ब्राह्मणजातीयानां भवितु महेति किन्तर्हि एकजातीनां शूद्राणामेवायं धर्मः। कुतएतन्निश्चीयते द्विजातिषु विवाहविधौ विशेषवचनात्। दशमाध्यायेहि मनुस्सर्वेषा मपि वर्णानामक्षतयोनिपत्नीपरिग्रहएव सन्तानेषु स्वजातिसिद्धिरिति निर्विचिकित्सं निर्धारयाञ्चकार। तच्चोदाहृतमनुपदमेव। एवं सामान्येन निर्धारयन्नपि पुनर्विवाहविधौ तृतीयाध्याये "**सा प्रशस्ता द्विजातीनां दारकर्मण्यमैथुनी**" इति विशिष्य द्विजातीनामक्षतयोनिरेव विवाह्या नक्षतयोनिरिति द्वितीयमपि प्रतिषेधं शास्ति। तदेतद्विशेषेण द्वितीयं प्रतिषेधवचनं व्यर्थंसत् नियमार्थमवगंस्यते। कथं। द्विजातीनामक्षत योनिरेव विवाह्या न कदाचित्क्षतयोनिरपीति। किं कृतंभवति। आपद्धर्मोऽपि क्षतयोनिविवाहो द्विजातीनां नास्तीतिनिराकृतं भवति।

(2. D) शुल्कदानप्रतिषेधाच्च शूद्रधर्मोऽयं। किञ्च ऋतुमती विवाहे कन्यापित्रे शुल्कं न देयमिति शुल्कदानंप्रतिषेधति मनुः

**"पित्रे न दद्याच्छुल्कन्तु कन्यामृतुमतीं हरन्।**
**सहि स्वाम्यादतिक्रामेदृतूनां प्रतिरोधनात्"** ॥(९-९३)इति।

शुल्कदानादानव्यवहारश्च शूद्राणामेव विवाहे कदाचिदभ्यनुज्ञायते न द्विजातीनां। तेषान्तु सर्वात्मनाप्रतिषिद्धमेतच्छुल्कदानं प्रति ग्रहणंच। यद्यपि तृतीयेऽध्याये

**"न कन्यायाः पिता विद्वान गृह्णीयाच्छुल्कमण्वपि।**
**गृह्णन् शुल्कंहि लोभेन स्यान्नरोऽपत्यविक्रयी"** ॥(३-५१)

इत्यादिना शुल्कग्रहणं विशेषतो विदुषां सतामण्वपि न कार्य मिति सर्वेषामेव मनुर्निराचकार। तथाऽपि पुनर्नवमे अत्रैवप्रकरणे

**"आददीत न शूद्रोऽपि शुल्कं दुहितरं ददत्।**
**शुल्कं हि गृह्णन् कुरुते छन्नं दुहितृविक्रयम्"** ॥ (९-९८)

इतिश्लोके शूद्रोऽपीत्यपिशब्देन कैमुतिकन्यायेन द्विजातीनां शुल्कग्रहणमत्यन्तमकार्यमिति तार्तीयमेव शुल्कग्रहणप्रतिषेधं द्विजातीनां दृढीकरोति। शूद्रविषयेच कदाक्रियमाणमपि शुल्कग्रहणं न द्विजातीनामिव निन्दितंभवतीति अनेनैवापिशब्देन पक्षे तदभ्यनुजानाति। एवमभ्यनुज्ञायमानमपि शुल्कमृतुमतीविवाहे न देयमिति पुनर्विशिष्य प्रतिषेधति। एतस्माच्चशुल्कदानप्रतिषेधादवगच्छामः यत्र शूद्रविषये शुल्कदानग्रहणयोश्शास्त्रेण प्रसङ्गोऽस्ति तद्विषयोऽयमृतुमतीविवाहइति। नह्यसति प्रसङ्गे प्रतिषेधोभागीभवति। नचाशूद्रविवाहे शुल्कदानस्य तद्ग्रहणस्यवा प्रसङ्गश्शास्त्रेण शक्योनिरूपयितुं। तस्माच्छास्त्रतश्शूद्र विषयकस्य शुल्कदानस्य प्रतिषेधाल्लिङ्गादयमृतुमतीविवाहोऽपि शूद्र मात्रविषयकइति निर्णेष्यामः। तथाच शूद्राणामेवायमापद्धर्मऋतुमतीविवाहइति मनोरभिप्रायः पर्यवस्यति। इममेवच गूढं मनोरभिप्राय मवलम्ब्य विवाहात्प्राक्दृष्टरजस्का वृषळ्येवभवति तत्पतिस्तत्सन्तान श्च एकजातिर्वृषळएवेति स्मर्तारस्सर्वेऽप्याघोषयन्ति। तद्वचनानिच भूयांसि पुरस्तादुदाहृतानि। अपिच इतोऽप्याधिकमत्रविषये मनो रभिप्रायमनुपदं स्फुटीकरिष्यामः। तस्माद्वितीयोऽपि हेतुरसाधकइति सिद्धम् ॥

(3) यदप्यन्यत् कथयन्ति, मनुकाले युवतयोऽप्यविवाहिता अभूवन्निति यच्च कन्याशब्दो युवतिमयुवतिंवा पुरुषोपभोगविहीनां स्त्रियमाचष्टइति तदुभयमप्यसाधु। तत्र कन्याशब्दस्तावद्यौवनात्प्राचीने प्रथमेवयसि वर्तमानामेवस्त्रियमभिधत्ते न जातु युवतिमप्यभिदधाति। तथाच आचार्यः पतञ्जलिराह "**कन्यायाः कनीनच**" (व्या—४—१—११६)इतिसूत्रे "इदंविप्रातिषिद्धं। कोविप्रातिषेधः। अपत्य

मितिवर्तते । यदिच कन्या नापत्यं । अथापत्यं न कन्या । कन्याच अपत्यंचेति विप्रतिषिद्धं" इति । यदिहि कन्यापदं युवतिमप्यभ्यधास्यत् पतञ्जल्युक्तोविप्रतिषेधोनायोक्ष्यत । नहि युवतेस्सत्याअपत्य योगे कश्चिद्विरोधोऽस्ति। तस्माद्यौवनात्प्राचीनमेव वयः कन्याशब्दस्य प्रवृत्तिनिमित्तमिति निश्चिनुमहे । उपाध्यायः कैयटमिश्रोऽपि भाष्य वचनमिदमेवमेव व्याचष्टे "अक्षतयोनिः कन्या सा कथमपत्येन संबध्येतेतिभाव" इति। अमरसिंहोऽप्याह "**कन्या कुमारी गौरीच नग्निकाऽनागतार्तवा**" इति ।

एतेन कन्याशब्दपर्यायः कुमारीशब्दः पुरुषोपभोगविहीनां स्त्रियमाचष्टइति कल्पनमपि परास्तं । अक्षतयोनिं प्रथमवयसमेवहि स्त्रियं कुमारीशब्दोऽपि ब्रूते न युवतिमपि। तथाच "**वयसिप्रथमे**" (व्या-४—१—२०) इतिसूत्रे कुमारीशब्दं प्रकृत्याचार्यःपतञ्जलिरभाषिष्ट "**संबन्धादेव वयोगम्यत**" इति। अस्यच भाष्यस्य इदमुपाध्यायकैयटकृतं व्याख्यानं "संबन्धादेवेति औत्पत्तिकाद्वाच्यवाचकभावलक्षणात्संबन्धादेवेत्यर्थः । कुमारशब्दस्यहि प्रथमंवयः प्रवृत्ति निमित्तं" इति ।

ननुच भोः अत्रैवसूत्रे पतञ्जलिवचनमेवमपि दृश्यते "कथंतर्हि वयोगम्यते। संबन्धाद्वयोगम्यते। कोऽसौ संबन्धः। पुंसासहाऽसंयोग" इति । इदंवचनमवलम्ब्यैव पुरुषसंबन्धरहितैव कुमारीपदार्थइति पूर्वमवोचाम । तत्रैवंसति कथमिदानीं प्रथमंवयः कुमारीशब्दार्थइति प्रतिजानीषइतिचेत् । बाढमेवं भाष्यार्थं मन्यते भवान्। किन्तु भ्रान्तिरेषा भवतः। नहीदंभाष्यं सिद्धान्तवचनं। पूर्वपक्षोक्तिर्ह्येषा। अतएवसिद्धान्ताभिधानसमये पुंसासहासंबन्धइतिपूर्वपक्षोक्तमर्थमपहाय "संबन्धादेव

वयोगम्यत" इति गोनर्दीयस्सिद्धान्तयति । संबन्धश्चायं पदपदार्थयोः प्रसिद्धो वाच्यवाचकभावएवेति कैयटोऽपि व्याचचक्षे । युक्तंचैतदेव मेवेति प्रतिपत्तुं । अन्यथाहि पुंसि नोपपद्येत । यदि पुंसंबन्धविहीनां कुमारीशब्दः प्रत्याययिष्यत् तदा तत्प्रकृतिभूतः कुमारशब्दः पुमांस मभिधातुं प्रयुज्यमानो नोपापत्स्यत । नहि पुंसि पुंसंबन्धतदभावावस्थे युज्येते । नच भोगविहीनत्वमात्रं तदर्थइतिकृत्वा पुंस्यप्येषउपपन्न प्रयोगइतिवाच्यं । एवंसति नैष्ठिके ब्रह्मचारिणि जरठेऽपिहि कुमार इतिप्रयोगआपद्येत । नचैतदस्ति । तस्मात् पुमान् स्त्रीवा प्रथमवया एव कुमारपदार्थः नयुवा युवतिर्वा । काठकभाष्ये श्रीभगवत्पादाअपि "**तं ह कुमारं सन्तमि**" त्यत्र कुमारपदमेवमर्थमेवाविवृण्वन्ति "कुमारं प्रथमवयसं सन्तं अप्राप्तप्रजननशक्तिं बालमेव" इति । एवमर्थकएवच कन्याशब्दोऽपि ।

अतएव वृद्धायां कुमारीशब्दः प्रयुज्यमानो गौणएवेति मुक्त-संशयं कैयटोब्रूते । तथाच तद्वचनं "साहचर्यात्तु पुंसासहासंप्रयोग मुपादाय वृद्धायां गौणः कुमारीशब्दः प्रयुज्यत"इति । एतेनैव कैयट वचनेन अप्रथमवयस्सु युवत्यादिषु कन्याशब्दप्रयोगोऽपि गौणएवेति सुष्ठुव्याख्यातो भवति । तथाच "**कन्यायाः कनीनच**" ति सूत्रे सिद्धान्ते पतञ्जलिराह "नैतद्विप्रतिषिद्धं । कन्याशब्दोऽयं पुंसाऽभि संबन्धपूर्वकेसंप्रयोगे निवर्तते । याचेदानींप्रागपि संबन्धात्पुंसासहसं-प्रयोगं गच्छति तस्यां कन्याशब्दो वर्ततएव । कन्यायाः कन्योक्ता-याः कन्याभिमतायाः" इति । अत्र कन्याशब्दस्य युवतौ प्रयोगे गौण त्वनिमित्तं "पुंसाअभिसंबन्धपूर्वक" इत्यादिना विवाहाकरणमुपपाद्यते । पुंसाअभिसंबन्धः विवाहः । तथाच कैयटआह "शास्त्रोक्तोविवाहो

ऽभिसंन्धः । तत्पूर्वके पुरुषसंयोगे कन्याशब्दो निवर्तते । यातु शास्त्रोक्तेन विवाहसंस्कारेणविना पुरुषंयुनक्ति सा कन्यात्वं नजहाती" ति । एवमविवाहितां युवतिं पुरुषसंसृष्टां कन्याशब्दगौणार्थमाश्रित्य कन्याया अपत्योपपादनमेकःप्रकारः । मुख्यार्थमक्षतयोनिमाश्रित्यैव प्रकारान्तरं कैयटआह । "अन्येत्वाहुः मुनिदेवतामाहात्म्यात् या पुंयोगेऽप्यक्षतयोनिर्भवति यथा कुन्ती मन्त्राहूतदिनकरोत्पादितकर्णाख्यपुत्राऽपि पुनःकन्यैवाभूत् तदपत्यं कानीनशब्दाभिधेयमि" ति । एवं च कन्याकुमारीशब्दावक्षतयोनावेव मुख्याविति शब्दशास्त्रकाराणां सिद्धान्तः ॥

मनुरपि कन्यां युवतिंच विभागेन व्यपदिशन् अक्षतयोनिरेव कन्याशब्दार्थइति निश्चाययति । तथाच एकादशे होमाधिकारिनिरूपणे मनुराह

"नैवकन्या नयुवतिर्नाल्पविद्यो नबालिशः ।
होता स्यादग्निहोत्रस्य नार्तोनासंस्कृतस्तथा" ॥

(११—३६) इति ।

अत्र कन्येति युवतिरितिच भेदेन व्यपदेशादयुवतिरक्षतयोनिरेव कन्येतिनिश्चीयते । शान्तिपर्वणि महाभारतेऽपि एवं पठ्यते

"नैवकन्या नयुवतिर्नामन्त्रज्ञो नबालिशः ।
परिवेष्टाऽग्निहोत्रस्य भवेन्नासंस्कृतस्तथा" ॥

(१६३—२१) इति ।

स्मृतिषुच "पर्युक्षणं विना पत्नी जुहुयात्कन्यकाऽपिच" । "द्विवर्षात्प्राग्विवाहश्चेत्कन्यकामरणं यदि" । इत्याद्यासु अक्षतयोनिपरतयैव कन्यकापदं भूयः प्रयुज्यमानमुपलभ्यते ।

यत्तु "**सकामां दूषयंस्तुल्यो नवधं प्राप्नुयान्नरः**" । (८—३६४) इति मनुना कन्यकायास्सकामत्वाभिधानाद्युवतिरपि कन्येतिकल्पयन्ति । तद्विपरीतं । सकामामितिहि नायं भोगाभिलाषवाची कामशब्दः । किन्तु सकामां साङ्गीकारां संमतिमतीमित्येतत् । अतएव पक्षान्तरेऽकामामित्युपपद्यते । असंमतिमतीमितिहि तदर्थः । योहि मन्यते कामो भोगाभिलाषइति तस्य समनन्तरश्लोकेषु विरोध स्स्यात् । समनन्तरग्रन्थेहि गुह्यदेशे अङ्गुळिप्रक्षेपेण कन्यादूषकस्य दण्डविधावपि अभिषह्यदूषणं सकामादूषणमितिद्वैविध्यं मनुराह

**"अभिषह्यतु यःकन्यां कुर्याद्दर्पेण मानवः ।**
**तस्याशुकर्त्ये अङ्गुल्यौ दण्डं चार्हति षट्शतम् ॥**
**सकामां दूषयंस्तुल्यो नाङ्गुळिच्छेदमाप्नुयात्**" ॥ इति ।

नह्यत्रांगुळिप्रक्षेपदोषवचने "सकामामि" त्यस्य भोगाभिलाष वतीमित्यर्थस्संभवति । तथा कन्याया युवत्याः स्त्रियाश्च विभागेन कन्यांप्रत्येवं दूषकत्वे "कन्यैव कन्यां या कुर्यादि" त्यादिना दण्ड भेदं मनुरनुशास्ति । नहि स्त्रीणामेव परस्परेण भोगाभिलाषइतिसंभाव यितुं शक्यते । तस्मात्सकामामिति साङ्गीकारामित्येवार्थो ग्रहीतव्यः । सचायमर्थो नावश्यं तस्या युवतिभावमभ्युपपादयितुं क्षमते, अङ्गीकारानङ्गीकारयोर्यौवनानपेक्षत्वात् । तस्मान्नानेन लिङ्गेन मनुकाले युवतिरपि कन्या बभूवेति कल्पनं घटते ।

अपिच मनुस्मृतिर्हिनाम धर्मशास्त्रं नेतिहासः । धर्मशास्त्राणि च प्रायेण चोदनाप्रधानानि भवन्ति । नहि तेषु तत्तत्कालस्थोऽर्थो लेशतोऽप्युदाह्रियते । इतिहासेष्वेव पुनरेषा शैली, यत्प्रायेण तत्तत्कालस्था अर्था उदाह्रियन्तइति । नखलु दण्डविधौ प्रायश्चित्तोपदेशे

षुच निमित्ततयोच्यमाना ब्रह्मवधसुरापानादयोदोषास्साकल्येन मनु कालएवावर्तन्तइति कल्पने प्रमाणमस्ति तथा कल्पयन्वा भवति श्लाघनीयप्रज्ञः । विस्तरेणचैतदादावेवावोचाम । तस्मादसमञ्जसमेतन्मनु काले युवतयः कन्या अभूवन्निति कल्पनं । तथाचासतिबाधकवचने कन्याकुमारीशब्दावक्षतयोनिमेवाभिधत्तइति मनोरप्यभिमतस्सिद्धान्त एष न केनचिन्निराकर्तुं पार्यते ।

एवंचसति

"अकन्येतितु यः कन्यां ब्रूयाद्द्वेषेण मानवः ।
स शतं प्राप्नुयाद्दण्डं तस्या दोषमदर्शयन्" ॥ (८--२२५)

इतिवचने यत्कन्याया अकन्यात्वेन दूषणं मनुराह तत् अक्षत योनिंप्रति क्षतयोनिरितिदूषणमेवाभिप्रेतं नान्यदितिसिद्धं भवति । तथा च तत्रभवान् कुल्लूकभट्टो व्याचष्टे "नेयं कन्या क्षतयोनिरियमिति यो मनुष्यो द्वेषेण ब्रूयात्" इति । अनेन व्याख्यानवचनेनापि कन्यापद मक्षतयोन्यर्थकमितिसिद्धान्तो दृढीभवति । कन्यामुद्दिश्य क्षतयोनि रिति प्रख्यापनंच ख्यापयितुर्दण्ड्यत्वावहो महान्दोषइति मनुरभिप्रैति। एतेन पुरुषोपभोगएव कन्यकाया दोषो नर्तुमतीत्वमिति अधुनातनानां भ्रान्तिर्दूरापास्ता । अस्तु पुरुषोपभोगदोषविमर्शः परस्तात् । ऋतुमती त्वमेव तावदादितो महान्दोषः कन्यकानाम् ।

ननु कीदृशोऽयं दोषः, यद्वचने वक्तुर्दण्ड्यत्वमपि आपततीति चेत्, तदेतदनन्तरश्लोकेन स्वयमेव मनुराह—

"पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः ।
नाकन्यासु क्वचिन्नृणां लुप्तधर्मक्रियाहि ताः" ॥
(८—२२६) इति ।

वैवाहिकाःकिल मन्त्रा विचार्यमाणाः कन्यास्वेव विवाह्यमानासु प्रतिष्ठां लभन्ते । क्षतयोनिषु पुनर्बलादाकृष्यमाणाअपि न मन्त्रास्स्पन्दितुमप्युत्सहन्तइत्यर्थः । अत्र विवाहमन्त्राणामक्षतयोनिष्वेव प्रतिष्ठितत्वमभिदधानोमनुः मन्त्रलिङ्गानि असंदिग्धान्यनन्यथासिद्धानि च सन्त्यनृतुमतीविवाहस्यैव प्रसाधकानि भवन्तीति मन्त्रार्थमपि स्वाभिप्रेतमाविष्करोति । तथाच मन्त्रलिङ्गविचारवादेऽवोचाम

**"अनेनैव प्रार्थनेन विवाह्यामतथाविधाम् ।**
**अप्रौढां गमयन्तीसत्यनुगृह्णातिच स्मृतीः"** ॥ इति ।

येत्वत्र मन्त्रलिङ्गानि ऋतुमतीविवाहस्यैव साधकानि भवन्तीति विपरीतं मन्यन्ते ते मन्त्रार्थमेव यथावन्नविजानन्ति मनुवचनेनचानेन विरुध्यन्ते । एवञ्च येषांद्विजातीनां मन्त्रपूर्वकं पाणिग्रहणं कर्म शास्त्रेषु विधीयते यथात्रैव मनुराह **"पाणिग्रहणिका मन्त्रा नियतं दारलक्षणमि"** ति तेषां क्षतयोनिरकन्या नैव विवाहार्हा भवति । येषां पुनरमन्त्रसाध्योविवाहश्शूद्राणां तेषान्तु क्षतयोनिरपि विवाह्या भवन्ती भवतुनाम । मन्त्रवतितु विवाहे सर्वथाप्यृतुमती अनर्हैव भवति । इतश्चापद्धर्मोप्यृतुमतीविवाहश्शूद्राणामेवेति निश्चेतुं शक्यम् ।

अपिच मनुराह न केवलमृतुमत्यः पाणिग्रहणानर्हाएव भवन्ति ! किंतर्हि "लुप्तधर्मक्रियाहिता" इति । श्रौतंस्मार्तंवा धर्मकार्यसामान्यमेव तासां लुप्यतइत्यर्थः । अतश्च ऋतुमतीविवाहस्तत्कर्ता तज्जन्यस्सन्तानस्सर्वोऽपि वेदबाह्यस्सर्वधर्मबहिष्कृतश्चेति मनोराभिप्रायस्सुतष्ठु प्रथते । सन्तुनामान्यानि प्रमाणानि । इदमेकं मनोर्वचनमलमृतुमती विवाहोऽशास्त्रीयइत्यत्र प्रमाणं । तथाच यावत्क्षतयोनिर्नभवति ताव-

देव वैदिकानां वेदसिद्धोविवाहो नातःपरमिति मनुवचनसिद्धान्तलाभेन तृतीयोऽपि हेतुर्विपरीतइति सिद्धम् ॥

किञ्च यतोविवाहात्प्रागृतुमतीत्वे सर्वधर्मबहिष्कृतत्वं भवति ततएवहेतोः मुख्यकाले कन्यादानमकुर्वतः पितुः भ्रूणहत्यारूपोभूयान्दोषस्स्मृतिषु स्मर्यते । मनुरप्याह "कालेऽदाता पितावाच्य" इति कालश्च गर्भाष्टममेववयो विवाहस्य मुख्यः । उपनयनस्थानापन्नोहि स्त्रीणां विवाहः स्थानिनउपनयनस्य योग्ये गर्भाष्टमएववयसि क्रियमाणोमुख्यो भवति नान्यदा । स्पष्टंचैतद्द्वितीयाध्याये मानवइति निरूपितं पुरस्तादेव । ननुयदि विवाहमुपनयनस्थानापन्नमभ्युपगच्छासि तदा आषोडशाद्वयसोऽपि विवाहकरणं शास्त्रीयमापद्येत। उपनयनस्यहि आषोडशाद्वयसो गौणः कालइति स्मरन्ति मुनयः । तथा मनुरपि **"आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते"** (२—३८) इति । सत्यमेवं स्यात् यदि विवाहस्य गौणःकालोविशिष्य न स्मर्यत । असति हि विशेषवचने सामान्यवचनमनुष्ठापकंभवति । विवाहस्य गौणोऽपि कालः प्रागेवर्तोरिति विशिष्य स्मरणं सर्वस्मृतिषु सुप्रसिद्धमवगम्यते ऋतौ निन्दावचनात् । तस्मान्नात्र स्त्रीणां विवाहे स्थानिधर्मस्य आषोडशिकत्वस्य प्रसङ्गइति बोध्यं । एवञ्च पूर्वापरपरामर्शेषु विचार्यमाणा मनुस्मृतिः ऋतुमतीविवाहं विशेषतोनिन्दितमावेदयतीतिस्थितं ।

यदपिमन्यन्ते ब्राह्मादिष्वष्टविधेषु विवाहेषु गान्धर्वोनाम कश्चिद्विवाहभेदः परिगण्यते । सच विवाहो वधूवरयोः परस्पराभिलाषपूर्वकं स्वयमेव क्रियते । तथाच तल्लक्षणं मनुराह—

**"इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्यच ।**
**गान्धर्वस्सतु विज्ञेयो मैथुन्यःकामसंभवः"** ॥(३—३२) इति

गान्धर्वश्च विवाहः कामोपबन्धेन विधीयमानो युवत्याएव उपपद्यते न बालिकायाः । तच्चेमं गान्धर्वविवाहं मनुयाज्ञवल्क्यप्रभृतय स्स्मर्तारो ब्राह्मणानामपि करणार्हमभ्युपगच्छन्ति । यद्यपि ब्राह्मो, दैव, आर्षः, प्राजापत्यइति चत्वारएव विवाहा ब्राह्मणस्य प्रशस्ताइति मनुराह **"चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः"** (३—२४) इति । तथाऽपि ब्राह्मणानां गान्धर्वं न प्रशंसति नापि निषेधति । ततश्च "अप्रतिषिद्धमनुमतं भवती" ति न्यायेन गान्धर्व विवाहोऽपि ब्राह्मणानां मन्वाद्यभिमतएवस्यादिति मन्यामहे । तथाच ऋतुमतीविवाहश्शास्त्रीयएवेति ।

एतदपि भ्रममात्रं । गुणदोषकीर्तनावसरेऽत्यन्तगर्हितत्वाद्गान्धर्वस्य । विवाहभेदानां गुणदोषविभागमारभमाणोहि मनुः ब्राह्मादींश्चतुरो विशिष्टगुणान्निरूपयन् आसुरगान्धर्वराक्षसपैशाचान् चतुरोऽपिविवाहानत्यन्तगर्हितानसत्सन्तानहेतूंश्चाभिधाय स्फुटं प्रतिषेधति । तथाहि तद्वचनानि—

**"यो यस्यैषां विवाहानां मनुना कीर्तितोगुणः ।**
**सर्वं शृणुत तं विप्रास्सर्वं कीर्तयतो मम ॥** (३—३६)
**दश पूर्वान् परान् वंश्यान् आत्मानञ्चैकविंशकम् ।**
**ब्राह्मीपुत्रस्सुकृतकृन्मोचयेदेनसः पितॄन् ॥** (३७)
**दैवोढाजस्सुतश्चैव सप्तसप्तपरावरान् ।**
**आर्षोढाजस्सुतस्त्रींस्त्रीन् षट्षट्कायोढजस्सुतः ॥** (३-३८)
**ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः ।**
**ब्रह्मवर्चस्विनः पुत्राः जायन्ते शिष्टसंमताः ॥** (३—३९)
**रूपसत्वगुणोपेताः धनवन्तो यशस्विनः ।**
**पर्याप्तभोगा धर्मिष्ठाः जीवन्तिच शतंसमाः ॥** (४०)

इतरेषुतु शिष्टेषु नृशंसानृतवादिनः ।
जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषस्सुताः ॥ (३—४१)
अनिन्दितैस्त्रीविवाहैरनिन्द्या भवति प्रजा ।
निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान्विवर्जयेत्'' ॥
(३—४२) इति ।

तथा कुविवाहोगान्धर्वादिः कुलहानिकरइत्यपि उपरिष्टान्निरूपयिष्यति मनुः

"कुविवाहैः क्रियालोपैः वेदानध्ययनेनच ।
कुलान्यकुलतांयान्ति ब्राह्मणातिक्रमेणच" ॥ (३—६३) इति ।

योहि वैदिकधर्मविद्वेषिप्रजाजनकं गान्धर्वविवाहं कर्तव्यमाशास्ते स वैदिकधर्मप्रद्वेषीति मनोरभिप्रायः । तस्मात्कुलभ्रंशकरः वेदविद्विष्टश्च गान्धर्वविवाहो न वैदिकानामर्हइतिस्थितम् ।

ननु कलिवर्ज्येषु रजस्वलाविवाहो न परिगण्यते । अतश्च कलौ तदनुष्ठाने कोविरोधइतिचेत्, साधुपृष्टं देवानांप्रियेण । नहि कलिवर्ज्येष्वगणनमात्रेण कलौ किञ्चिदनुष्ठेयं भवति । यद्धि कालान्तरे करणार्हसत् कलिमात्रे न कर्तव्यं भवति तथाविधंहिकर्म कलिवर्ज्येषु पठ्यते । तच्च कलौ नक्रियते । नतु सर्वदावर्जनीयं कलिवर्ज्येषु पाठ्यं भवति । रजस्वलाविवाहश्च सर्वदावर्जनीयइति कथं कलिमात्रवर्जनीयेषु परिगण्येत । नहि कलौ कालान्तरेवा रजस्वलाविवाहः कदाचित्करणार्हो भवति बभूववा । सुरापानादिवच्चेदं द्रष्टव्यं । नहि सुरापानं कलिवर्ज्येषु न गण्यतइतिकृत्वा कलावनुष्ठेयमिति कश्चिदुदन्तुपादेयवचनोभवति । सर्वदाप्रतिषिद्धंहि तत् । एवमयमपि रजस्वलाविवाहस्सर्वदा प्रतिषिद्धस्सन् कलिवर्ज्येष्वगणितइत्येतावता कथं कलौ करणा

ईस्स्यात् । तस्मादपरामृश्यजल्पितमसमञ्जसमेतद्वचनं । तथाच श्रुति स्मृत्यादिसकलशास्त्रविरुद्धोऽयमृतुमतीविवाहो वैदिकानामत्यन्तनिन्दितोमनसाप्यस्मरणीयइति स्थितम् ।

ननु आस्तामेतदृतुमतीविवाहप्रतिषेधि सर्वमपिशास्त्रं दूरे । सत्य पि शास्त्रे दृष्टविरोधाद्बालिकाविवाहकरणं न रोचयामहे । दृष्टविरोधो ह्यत्र भूयान्भवति । प्रथमंतावद्विवाह्यमानायाबालिकाया गुणागुणविवेक विज्ञानाभावेन तदभिमतोभर्तैव न सिध्यति । नच कन्यादानाधिकृताः पित्रादयएव विशिष्टगुणं वरमन्विष्य निर्णेष्यन्तीति सांप्रतं, भिन्नरुचित्वाल्लोकस्य । यद्यपि पित्रादिस्वाशयानुसारेण कंचिद्वरं विशिष्टगुण इति निर्धारयति । तथाऽपि नासौ पश्चाद्वध्वाहृदयङ्गमएव भवितेति शक्यं प्रतिज्ञातुं । भिन्नरुचिर्हि लोकः । नहि सर्वं सर्वस्मै रोचमानं भवति । पित्रादिभ्यो रोचमानोऽपि वरोयदि बालिकायै नरोचेत तदा दुःखावहमेव तद्दाम्पत्यं पर्यवस्येत् । यदितु गुणदोषविवेचनशक्तिमती कन्यैव स्वमनोरथानुगुणं वरमादितोनिश्चिनुयात् तदा नास्यानर्थस्य प्रसङ्गो भवेत् । तस्माद्विवेचनशक्तिविहीने वयसि कन्यायाविवाहकरणं दृष्टविरुद्धं । अतश्च यौवनानन्तरं स्वाभिमतवरविवेचनशक्तिसंपन्नानामेव विवाहकरणं दम्पत्योस्सुखाय स्यादिति तथैव निर्णेष्यामइति ।

अत्र ब्रूमः । यद्यपि युवतीविवाहे शास्त्रविरुद्धेऽपि दृष्टः कश्चिद्गुणस्स्यादितीव भवतोविभाति । परमार्थतस्तु वैदिकमार्गातिलङ्घनमेकमेव इह युवतीविवाहे अव्यभिचारिफलं निश्चेतुं शक्यं । न पुनर्भवदूहितोगुणाभासः । चिरानुभूतलोकयात्राकैः पित्रादिभिरपत्यस्नेहेन यथा शक्तिनिर्णीयमानो वरएव कन्यायाश्श्रेयसे स्यात् नत्वेतदर्थं कन्याया यौवनं प्रतीक्षणीयं । नह्यननुभूत लोकतन्त्रा युवत्यपि सती कन्यका

स्वयमेव गुणवन्तं निर्धारयितुं क्षमते । प्रत्युत यौवनदोषाच्चक्षुःप्रीणनं रूपविशेषमात्रं किमपि सा कामयमाना कामयेत । नत्वान्तरान् गुणानवगन्तुं सा शक्नोति । तस्माद्युवतीविवाहे दृष्टानुकूल्यमितिभ्रान्तिरेषा।

गुणवदन्तरलाभेच पूर्वजिहासा स्याद्वस्त्रादिवत् । अपिच प्रौढा यास्सत्यास्त्रिया यो हृदयङ्गमस्सएव वरणीयइति यदा कल्प्यते तदानीमेव महाननर्थआपद्येत । प्रौढाहि सती प्रथमं कञ्चनगुणवन्तमभिप्रेत्य वृण्वानाऽपि यदिततोऽपि विशिष्टगुणमन्यं कंचित्पश्यति लभतेवा तदा पूर्वस्मिन्पुरुषे सा नियतमपरज्येत । अपरक्ताच तं हातुमिच्छेद्वस्त्रादिवत् । तद्यथा वस्त्राभरणफलकुसुमादीनि वस्तूनि विशिष्टतराण्युत्तरोत्तराणि लभमाना पूर्वपूर्वं जिहासति एवमिममपि पूर्वपुरुषमनादराज्जिहासेत् । सर्वोहि लोकस्सातिशयएव भवति । एवञ्च महानेवानर्थआपद्येत । अतः प्रौढायास्सत्यास्तदनुरागानुगुण्येन भर्तृकल्पनवादएव अनर्थावहः ।

बालिकाविवाहपक्षेतु एवंविधोदोषः प्रायेण नोत्पत्तुमर्हति । क्लृप्तमवलम्ब्य रागाभिवृद्धेरौरसवत् । अनुरागोत्पत्तेःप्रागेव यदि कचित्पुरुषे स्वानुगुणे भर्तृबुद्धिरवस्थाप्यते तदा पश्चात्प्रवर्धमानोऽप्यनुरागस्स्त्रियाःपूर्वक्लृप्तं तमवलम्ब्यैव प्रवर्धेत औरसइव पुत्रे पित्रोः । औरसंहि पुत्रमनेडमूकमपि अभिमानेन लोके गुरूकुर्वन्तःपितरः प्रायेण सर्वस्वदानेनाप्युपासीना दृश्यन्ते । विशिष्टबुद्धिमपिहि परकीयंपुत्रं नाद्रियन्ते । तत्कस्यहेतोः, पूर्वमुत्पन्नमवलम्ब्यैवपुत्रत्वाभिमानाभिवृद्धेः। उत्पन्नेहि रागे पश्चाद्विषयगवेषणायां स न क्वचिदवतिष्ठेत । अपितु यावद्गुणिविशेषदर्शनं तावदनवस्थितोऽतिप्रसजन्नेव वर्तेत । पूर्वक्लृप्त विषयावलम्बेन उत्पद्यमानः पुनारागः प्रायेण नव्यभिचरति । किन्तु

साधुमसाधुं वा तमेवविषयमवलम्ब्य वर्धेत। एषाहि लोकस्य शैली प्रत्यक्षसिद्धा दृश्यते। अतोऽनुरागाविर्भावहेतोर्यौवनात्प्रागनुरागविषय वरनिश्चये सत्येव स्त्रियोऽव्यवस्थितभर्त्रनुरागास्स्युः न युवतीविवाहे। ततश्च दृष्टविरोधोमहान् युवतीविवाहएव संभाव्यतइति सर्वथा स प्रेक्षावद्भिर्नादर्तव्यः।

यदपि बालिकाविवाहे बाल्यएव भोगप्रसङ्गाद्दम्पत्योस्तत्सन्तानस्यच निर्वीर्यता प्रसज्यतइति। नायं विवाहस्य तद्विधायकस्य शास्त्रस्यवा दोषः किन्तर्हि दम्पत्योरेवायं दोषः कामोनाम। अङ्गहि भवान् भोगविषयेऽपि शास्त्रचोदितं नियममनुसरतु, पश्यामः क्व पुनरस्य दोषस्य प्रसङ्गोभवितेति। तस्मादसदेतत्। नन्वेवमपि बालिकाविवाहे महदन्याय्यं संभावितमिति न वयं तमाद्रियामहे। शिशूनामेवहि सतीनामार्यबालिकानामनिवार्यं वैधव्यगर्तपतनमत्रपक्षे बहुळमापततीति महदत्र अन्याय्यं। बाढमन्याय्यमेवैतत् यदिसंभवति। तथाऽपि सोढव्यमेव अप्रतिकार्यत्वात्। ननुचायमस्ति प्रतीकारः यदृतुकालोत्तरमेव परिणयोनप्रागिति नियमः। सत्यमेवमूह्यते कारुणिकमूर्धन्येन भवता। वयमपि भवतश्श्रद्धातिशयमनुतापञ्चावेक्षमाणाश्शास्त्रमपि धिक्कृत्य भवदभिमतमेवाभ्युपगन्तुमालोचयेमहि यद्याहत्यायं नियमोऽभ्युपायस्स्यात् वैधव्यदुःखनिवृत्तये। कुतएतन्निर्णीतं भवता, ऋतुमतीविवाहः पुंसाममृतभावहेतुः अप्रौढाविवाहश्च आयुर्हानिकरइति। किमायुष्यकर्ममध्ये क्वचिदृतुमतीविवाहोपि परिगण्यते शास्त्रेषु तथा अपमृत्युकरेष्वप्रौढाविवाहोऽपि। अथ भवतैव ज्ञानचक्षुषा दृष्टोऽयमर्थः। वयन्तुपश्यामः नायमभ्युपायस्सर्वथा वैधव्यदुःखपरिहारस्य। प्रत्युत कदाचिद्दुःखातिशयहेतुरपि स्याद्भवदुक्तः परिहारोपायः। अविवेकदशापन्नाः किल

प्राणिनस्तज्ज्ञातमपि दुःखमविजानन्तएव प्रायेण कालमतिवाहयन्तो दृश्यन्ते । प्रगल्भावस्थास्तु पुनस्तदेव दुःखं भावनाविशेषाद्गुरूकुर्वन्तः कथं कथमपि कालं क्षणमपि युगमिवातिवाहयन्ति । तस्मात्प्रौढदशायां तदेवदुःखमतिगरीयोभवेत् यद्यापतति ।

अपिच निमित्तपरिहारमन्तरेण कथन्नु नाम नैमित्तिकं दुःखमत्यन्ताय परिहर्तुं पार्येत । वैधव्यदुःखस्यच निमित्तं धवसंबन्धवियोगएव । सचायं वियोगो यदि धवसंबन्धनियमशिरसि निपात्यते नूनं जातु संभाव्येतैव वनितानां । तस्मादयमेवतावदादितो दूरमपसारणीयो यदार्यवनितानामावश्यको भर्तृसंबन्धइति नियमः । त्यक्तेचास्मिन्नियमे नियतमार्यबालिकावैधव्यदुःखदग्धिष्ठास्सुखिन्यस्स्युः । किञ्च समानेसति स्त्रीपुंसयोर्वैवाहिके सुखेदुःखेवा स्त्रीणामेव विवाहो नित्यो नपुंसां तथा सकृदेव विवाहश्शास्त्रीयस्तासां तेषान्तु द्विस्त्रिश्चतुर्यथेच्छमितिच हन्त कोऽयंपक्षपातश्शास्त्रकृतामीश्वरस्यवा । तस्मात्स्त्रीणां भर्तृसंबन्धनियमएव प्रथमतोनिराकरणीयः ।

ननु भर्तृसंबन्धस्यैव परित्यागे कथन्नुनाम स्त्रियस्सुखिन्यस्स्युः । हन्त नैववयं ब्रूमो भर्तृसंबन्धएव परिहार्यइति । किन्तु तत्र नियमः परिहार्यइति वदामः । तथाच या यदा यं पुरुषं कामयते तस्यास्तदा स भर्ता भवतु । निर्वृत्ते पुनः किंचिदभीष्टे कर्मणि याथाकाम्यमेव । नतु सएव पुरुषस्सर्वदाऽपि भर्तेत्ययं नियमइति निश्चिते सिद्धान्ते कुतो वैधव्यदुःखस्यावकाशस्संभविष्यति । तस्मादयमेव निश्चितउपायस्स्त्रीदुःखपरिहारस्य ।

ननु अभ्युपायएव भर्तृनियमाभावस्त्रीणामैहिकसुखस्य । तथाऽपि शास्त्राणि भर्तृनियममभिदधानानीव दृश्यन्तइतिचेत् । हन्त कि

मेवं बिभेषि। कुत्र शास्त्रे स्त्रीणां भर्तृनियमो विधीयते। स्मृतिकाराः खल्वाधुनिकाः किमपिकिमपि कथयांबभूवुः। तच्च येन केनापि दृष्ट-हेतुना कथितं स्यादिति अस्मदीयं समाधानं ब्रूमः। प्रत्यक्षश्रौतु कुत्रा यं विधिरुपलभ्यते। तस्मादनियतभर्तृकत्वमेव स्त्रीणामतिप्राचीनस्सं प्रदायः नियमक्लेशस्तु अर्वाचीनएवेति ख्यापयिष्यामः। तस्माच्छ्रुतीस्स्मृतीर्वा सर्वाण्यपि शास्त्राणि पृष्ठतः कृत्वा यथादुःखमत्यन्ताय परिह्रियेत सुखञ्चाव्यभिचारि स्यात् तथायतनीयं धीरपुरुषैः यदि स्त्रियोऽनुकम्प्याइति परमार्थतएवमन्यते। किमनेन किञ्चिद्विळम्बकरणेन तृतीयप्रकारेण। नह्यत्रपक्षे स्त्रियोवा रक्षिता भवन्ति, एकान्ततश्शास्त्राणिवा समनुसृतानि भवन्ति। एकतश्शास्त्रानुसरणावश्यकत्वश्रद्धाऽऽभासेन नियन्त्र्यसइव। अपरतश्च बालिकादुःखपरिहरणोपायमार्गणक्लेशेन सुतरामुपतप्यसे। नहीदमुभयमपि संपादयितुं शक्यं। दुर्घटं हीदं यथाभिमतकरणं शास्त्रानुसरणञ्चेति। यदि यथाभिमतंसुखं स्त्रीणां साधयितव्यमिति एकान्तेनाध्यवस्यसि तदा निर्मृज्यतां शास्त्रानुसरण वासनाऽऽभासः। अथ भवितव्यानुसार्येव भाविदुःखं, नहि सन्मार्ग मुल्लङ्घ्य कश्चित्सुखी भविता, सस्यमिव मर्त्यः पच्यते। सस्यमिवाजाय ते पुनः, तस्मात्सत्यपि मरणान्ते दुःखे नजातु शास्त्रमितिवर्तितव्यं, स्वधर्मोहि श्रेयानिति, धीरदीर्घमालोच्यते, तदा सुदूरेपरिह्रियतामसौ भाविदुःखदुस्सम्भावनासमापतितोहृदयवेपथुः। यदाह भगवान् "**स्वधर्ममपिचावेक्ष्य नाविकम्पितुमर्हसि**"। (गी २—३१) इति। सर्वथाऽपितु लोकबुद्धिशास्त्रोभयसमीकरणसंपादनक्लेशेन अन्तराडोला करणं परं नाभिमतार्थसिद्धये स्यात्। तस्मात् यदि वेदबाह्यःस्वप्रतिभा मात्रप्रमाणश्च तदा यथेच्छाचरणमेव तस्य प्रसज्येत। इदंपुनऋतुमती

विवाहकरणमिति श्रुतिस्मृत्यनुसरणञ्चेति परस्परासंबद्धमतिविपरीतं। तथाच यद्यास्तिको वेदवचनश्रद्धालुश्च भवति तदा तस्य गर्भाष्टमादारभ्य प्रागृतोरेव स्त्रीणां विवाहकरणं शास्त्रीयं धर्म्यञ्च भवतीति सर्वशास्त्रसिद्धस्सिद्धान्तः ॥ ❀ ❀ ❀

---

श्रुतिस्मृतिवचांस्येवं मीमांसित्वा यथाविधि।
शिष्टाचारेण संयोज्य निरणायि वयो मया ॥ १ ॥
विधिसिद्धोविवाहोऽयं वेदैकवशवर्तिनाम्।
ब्राह्मणानांहि कन्यानामृतोः प्रागेव युज्यते ॥ २ ॥
(यद्यपि) उत्पथं प्रतिपन्नानामाङ्ग्लमदचेतसाम्।
चित्तशुद्धेरभावेन नायं रोचेत निर्णयः ॥ ३ ॥
कालोहि कलिरत्यर्थं कलुषीकुरुते जनान्।
नाद्य शास्त्रीयमर्यादा नच ब्राह्मण्यरक्षणम् ॥ ४ ॥
मन्त्रशक्तिर्योगशक्तिर्महिमा ब्रह्मवर्चसम्।
ज्ञानं शमदमादिश्च सर्वमस्तमगान्नृषु ॥ ५ ॥
महत्त्वबुद्धिर्दूरेऽगात् मन्वादिषु महर्षिषु।
आत्मनःप्रतिभा त्वासीदागमाच्च बलीयसी ॥ ६ ॥
धैर्यमालम्बते हन्तुं धर्माधर्मद्वयीमपि।
शिखोपवीतमात्रेच ब्राह्मण्यमवशिष्यते ॥ ७ ॥
कृन्तन्तिच विलुम्पन्ति केचिदेनां शिखामपि।
भक्ष्याभक्ष्यविवेकस्तु बहुदूरे पलायत ॥ ८ ॥
श्रुतियोग्येन वक्त्रेण स्वैरं धूमञ्च चूषति।
सजग्धिश्च सपीतिश्च सर्वैरपि विजृम्भते ॥ ९ ॥

नौभिस्समुद्रयात्राच नीता तीर्थाटनस्थितिम् ।
विधवामुपयच्छन्ते विवहन्ते रजस्वलाम् ॥ १० ॥
समाजाअपि भूयांसस्संमिळन्ति ततस्ततः ।
व्यवस्थां वैदिकीं प्रायो विध्वंसयितुमुत्सुकाः ॥ ११ ॥
उपदेष्टुंच तत्सर्वं नृणामुपाचिकीर्षया ।
अटाट्यन्तेच बहवः वाचाटा वैदिकद्विषः ॥ १२ ॥
तादर्थ्येन प्रकाश्यन्ते पत्रिकाश्च परश्शताः ।
तृणाय मत्वा द्रविणमिहैके विनियुञ्जते ॥ १३ ॥
कष्टमेषकथं ब्रूयां कलिकालस्य चेष्टितम् ।
अधरोत्तरमद्याभूदार्यावर्तस्य वैभवम् ॥ १४ ॥
(तथापि) अद्यापि विरळाः केचिदाजानशुचयस्स्वयम् ।
वेदमार्गपरिष्कारे विराजन्ते धृतव्रताः ॥ १५ ॥
सन्तापदां सहस्राणि साहाय्यंच विहीयताम् ।
प्राप्नोतु मरणंवाऽपि स्पन्दन्ते सत्पथान्न ते ॥ १६ ॥
तथाविधानां महतां साह्यमत्र भविष्यति ।
इति विश्वस्य संक्षेपादमुमर्थमलेखिषम् ॥ १७ ॥
अभिदधतु सहस्राण्याचरन्त्वप्यनेकान्
क्वचिदपिच यथेच्छं यान्तु नैवात्र खिद्ये ।
स्वकृतमखिलमेतत्सुष्ठ्विति स्थापनार्थं
श्रुतिमपि कुरुते यत्साक्षिणीं तत्तुदुःखम् ॥ १८ ॥
श्रुतिपथमपहाय स्वाभिलाषप्रधानाः
किमपिच कलयन्तां केचिदैदंयुगीनाः ।

सहजगुरुकृपातस्सत्यपि प्राणकृच्छ्रे
सरति मतिरियं मे संप्रदायाध्वमात्रे ॥ १९ ॥
चपलकलिसमाख्याच्चण्डवाताभिघाता-
च्छ्रुतिपथपरिहीणा यान्तु चञ्चास्समन्तात्[1] ।
सहजधृतिसमृद्धाश्शैलकल्पा महान्तः
कलिमपि कृतयन्तः केऽपि सन्त्येव सन्तः ॥ २० ॥

---

इति श्रीमन्महामहोपाध्यायत्यागराजमखिराजशिष्यस्य
अद्वैतसभापण्डितस्य वेदान्तकेसरिणः श्रीकुम्भघोण
मठास्थानपण्डितस्य प. गणपतिशास्त्रिणः
॥ कृतिषु वयोनिर्णयस्समाप्तः ॥

---

१–चञ्चाः तृणमयाः पुमांसः ।

---

PRINTED AT THE "SRI VIDYA PRESS," KUMBAKONAM.